वालस्यास्यद्वितीयस्यकेभविष्यद्गुणाःकिल ॥ गालवेनतुयच्चोक्तंकर्मतत्कथयाधुना ॥ १३८ ॥ साब्रवीन्नाद्यवक्ष्येवैवादिष्यामिपुनःप्रभो ॥ सोब्रवीद्वदचाद्यैवनोचेन्नाश्नामिभोजनम् ॥ १३९ ॥ साप्राहश्रूयतांब्रह्मन्वदिष्येवचनंहितम् ॥ कातरेणाद्ययत्पृष्टंभाव्यंकारयितुंकिल ॥ ॥ १४० ॥ इत्युक्तवतिवाक्येचबालएवत्वचेतनः ॥ हरेर्जगामसाहाय्यंकर्तुंरथविशारदः ॥ १४१ ॥ तंव्रजंतंहिगंधर्वाविश्वावसुपुरोगमाः॥ ज्ञात्वेंद्रस्यैवसाहाय्यंतेजसासमवर्धयन् ॥१४२॥ गंधर्वतेजसायुक्तःशिशुःशक्रंसमेत्यहि ॥ प्रोवाचाभ्येहिदेवेशप्रियोयंताभवामिते ॥१४३॥ तच्छ्रुत्वाचहरिःप्राहकस्यपुत्रोसिवालक ॥ त्वंयंतासिकथंचाश्वान्संशयः प्रतिभातिमे ॥ १४४ ॥ सोऽरौच्छमीकपुत्रंमांक्ष्माभवंविद्धिवासव ॥ गंधर्वतेजसायुक्तंवाजियानविशारदम् ॥ १४५ ॥ तच्छ्रुत्वाभगवाञ्छक्रःस्वेवभौयोगिनांवरः ॥ सचापिविप्रतनयोमातलिर्नामविश्रुतः ॥ १४६ ॥ ततोधिरूढःसुरथंशक्रस्त्रिदशपुंगवः ॥ रश्मीन्शमीकतनयोमातालिःप्रगृहीतवान् ॥ १४७ ॥ ततोमंदरमागम्यविवेशारिपुवाहिनीम् ॥ प्रविश्यददृशेश्रीमान्कथितंकार्मुकंमहत् ॥ १४८ ॥ सशरंपंचवर्णंतत्सितरक्तासितारुणम् ॥ पांडुच्छायंसुरश्रेष्ठस्तज्जग्राहसमार्गणम् ॥ १४९ ॥ ततस्तुमनसादेवान्ब्रजःसत्त्वतमोमयान् ॥ नमस्कृत्यशरंचापेसाधिज्येविनियोजयत् ॥ १५० ॥ ततोनिश्चेरुरत्युग्रंशरार्बर्हिणवाससः ॥ ब्रह्मेशविष्णुनामांकाःसूदयंतोऽसुरान्रणे ॥ १५१ ॥ आकाशंविदिशःपृथ्वींदिशश्चसशरोत्करैः ॥ सहस्राक्षोऽरिपक्षांश्चछादयामासनारद ॥ १५२ ॥ गजोविद्धोहयोभिन्नःपृथिव्यांपतितोरथी ॥ महामात्रोधरांप्राप्तोजंभश्चापिशरातुरः ॥ १५३ ॥ पदातिःपतितोभूमौशक्रमार्गणताडितः ॥ हतप्रधानंभूयिष्ठंवलंतच्चाभवद्रणे ॥ १५४ ॥ तंशक्रवाणाभिहतंदुरासदंसैन्यंसमालक्ष्यतदाकुजंभः ॥ जंभासुरश्चापिसुरेशमव्ययंप्रजग्मतुर्गृह्यगदेसुघोरे ॥ १५५ ॥ तावापतंतौभगवान्निरीक्ष्यसुदर्शनेनारिविनाशनेन ॥ विष्णुःकुजंभंनिजघान

वेगात्सस्यंदनाद्भ्रांन्यपतद्गतासुः ॥ १५६ ॥ तस्मिन्हतेभ्रातारिमाधवेनजंभस्ततः क्रोधवशंजगाम ॥ क्रोधान्वितः शक्रमुपाद्रवद्रणेसिंहंयथैणोहिवि पन्नबुद्धिः ॥ १५७ ॥ तमापतंतंप्रसमीक्ष्यशक्रस्त्यक्त्वैवचापंसशरंमहात्मा ॥ जग्राहशक्तिंयमदंडकल्पांपश्चात्ततोजंभवधेससर्ज ॥ १५८ ॥ शक्तिंचघंटांस्वरसस्वनां वैदृष्ट्वापतंतींगदयाजघान ॥ गदांचकृत्वासहसैवभस्मसाद्बिभेदजंभंहृदयेचतूर्णम् ॥ १५९ ॥ शक्त्यासभिन्नोहृदये सुरारिःपपातभूम्यांविगतासुरेव ॥ तंवीक्ष्यभूमौपतितंविसंज्ञं दैत्यास्तुभीताविमुखावभूवुः ॥ १६० ॥ जंभेहतेदैत्यबलेचभग्नेगणास्तुहृष्टा हरिमर्चयन्तः ॥ वीर्यंप्रशंसंतिशतक्रतोश्चसगोत्रभिच्छर्वमुपेत्यतस्थौ ॥ १६१ ॥ इतिश्रीवामनपुराणेभैरवप्रादुर्भावेजंभकुजंभवधोनामनव षष्टितमोऽध्यायः ॥६९॥ ॥ पुलस्त्यउवाच ॥ ॥ तस्मिंस्तदादैत्यबलेचभग्नेशक्रोब्रवीदंधकमासुरेंद्रम् ॥ एह्येहिवीराद्यगतामहासुरायो त्स्यामभूयोहरमेत्यशैलम् ॥ १ ॥ तमुवाचांधकोब्रह्मन्सम्यक्चभवतोदितम् ॥ रणान्नैवापयास्यामिकुलंव्यपदिशन्स्वयम् ॥ २ ॥ पश्यत्वं द्विजशार्दूलममवीर्यंसुदुर्धरम् ॥ देवदानवगंधर्वान्जेष्येसेन्द्रमहेश्वरान् ॥ ३ ॥ इत्येवमुक्त्वावचनंहिरण्याक्षसुतोंधकः ॥ समाश्वास्याब्रवी त्क्रुद्धःसारथिंमधुराक्षरम् ॥ ४ ॥ सारथेवाहयरथंहराभ्याशंमहाबल ॥ यावन्निहन्मिबाणौघैःप्रमथानथवाहिनीम् ॥ ५ ॥ इत्यंधकवचः श्रुत्वासारथिस्तुरगांस्तदा ॥ कृष्णवर्णान्महाकायान्प्रेषयामासतंमुने ॥ ६ ॥ तेयत्नतोपितुरगाःप्रेर्यमाणाहरंप्रति ॥ जघनेष्ववसीदंतःकृ च्छ्रेणोहुश्चतंरथम् ॥ ७ ॥ वहंतस्तुरगादैत्यंप्राप्ताःप्रमथवाहिनीम् ॥ संवत्सरेणसाग्रेणवायुवेगसमाअपि ॥ ८ ॥ ततःकार्मुकमानम्यबलेंदु सदृशंदृढम् ॥ नाराचैःसूदयामाससेंद्रोपेंद्रमहेश्वरान् ॥ ९ ॥ बाणैश्छादितमीक्ष्यैवबलंत्रैलोक्यरक्षिता ॥ सुरान्प्रोवाचभगवांश्चक्रपाणि

१ संवत्सरशब्दोऽत्रदिवसपरः । सहस्रसमं दीर्घसत्रमित्यत्रसमशब्दस्यवर्षपर्यायस्यादिवसपरत्वेन व्याख्यातत्वात् ।

जनार्दनः ॥१०॥ विष्णुरुवाच॥किंतिष्ठध्वंसुरश्रेष्ठाहतेनानेनशोभनम्॥तस्माद्यत्ताभवंत्वद्यत्वरिताविजयेप्सवः॥११॥शास्यंतामस्यतुरगाः समंरथकुटुंविना ॥ भज्यतांस्यंदनश्चायंविरथःक्रियतांरिपुः ॥ १२ ॥ विरथंतुकृतंपश्चादेनंधक्ष्यतिशंकरः ॥ नोपेक्ष्यःशत्रुरुद्रिक्तोदेवाचार्येणधीमता ॥ १३ ॥ इत्येवमुक्ताःप्रमथावासुदेवेनसामराः ॥ चक्रुर्वेगंसहेन्द्रेणसमंचक्रधरेणच ॥१४॥ तुरगाणांसहस्रंतुमेघाभानांजनार्दनः ॥ निमिषांतरमात्रेणगदयासव्यपोथयत् ॥ १५ ॥ समहास्यंदनात्स्कंदःप्रगृह्यरथसारथिम् ॥ शक्त्याविभेदहृदयेगतासुर्व्यसृजद्भुवि ॥ ॥ १६ ॥ विनायकाद्याःप्रमथाःसमंशक्रेणदैवतैः ॥ सध्वजाक्षंरथंतूर्णमभंजंततपोधनाः ॥१७॥ सहसासमहातेजाविरथस्त्यक्तकार्मुकः ॥ गदामादायबलवानभिदुद्रावदेवताः ॥ १८ ॥ ततःसोऽध्वौक्रमान्गत्वामेघगंभीरयागिरा ॥ उवाचवाक्यंदैत्येंद्रो महादेवंसहेतुमत् ॥ १९ ॥ भिक्षोभवान्सहानीकस्त्वसहायोस्मिसांप्रतम् ॥ तथापित्वांविजेष्यामिपश्यमेद्यपराक्रमम् ॥ २० ॥ तद्वाक्यंशंकरःश्रुत्वा सेंद्रान्सुरगणान्गणान् ॥ ब्रह्मणासहितान्सर्वान्स्वशरीरेन्यवेशयत् ॥ २१ ॥ शरीरस्थांस्तान्प्रमथान्कृत्वादेवांश्चशंकरः ॥ प्राहएह्येहिदुष्टात्मन्नहमेकोऽपिसंस्थितः ॥ २२ ॥ तद्दृष्ट्वामहदाश्चर्यंसर्वामरगणक्षयम् ॥ दैत्यःशंकरमभ्यागाद्गदामादायवेगवान् ॥२३ ॥ तमापतंतंभगवान्दृष्ट्वा त्यक्त्वावृषोत्तमम् ॥ शूलपाणिर्गिरिप्रस्थेपदातिःप्रत्यतिष्ठत ॥ २४ ॥ वेगेनैवापतंतंचविभेदोरसिभैरवः ॥ दारुणंसुमहद्युद्धंकृत्वात्रैलोक्यभीषणः ॥ २५ ॥ दंष्ट्राकरालंरविकोटिसन्निभंमृगारिचर्माभिवृतंजटाधरम् ॥ भुजंगहारंमलपंकधारिणंशार्दूलबाहुंशिखिलोचनंहरम् ॥ ॥ २६ ॥ एतादृशेनरूपेणभगवान्भूतभावनः ॥ विभेदशत्रूञ्छूलेनशुभदःशाश्वतःशिवः ॥ २७ ॥ सशूलंभैरवंगृह्यभिन्नेप्युरसिदानवः ॥ विजहारातिवेगेनक्रोशमात्रंमहामुने ॥ २८ ॥ ततःकथंचिद्भगवान्संस्तभ्यात्मानमात्मना ॥ तूर्णमुत्पाटयामासशूलेनसगदंरिपुम् ॥ २९ ॥

दैत्याधिपस्तुसगदांहरमूर्ध्निन्यपातयत् ॥ कराभ्यांगृह्यशूलंचसमुत्पत्याथदानवः ॥ ३० ॥ संस्थितश्चमहायोगीसत्त्वाधारःप्रजापतिः ॥
गदापातक्षताद्धरिमूर्ध्नोऽस्यासृगथापतत् ॥ ३१ ॥ पूर्वधारासमुद्भूतोभैरवोग्निसमप्रभः ॥ विद्याराजेतिविख्यातःपद्ममालाविभूषितः ॥
॥ ३२ ॥ अन्यस्माद्रुधिराज्जातोभैरवःशूलभूषितः ॥ रुद्रनाम्नातुविख्यातःसर्वलोकैस्तुपूजितः ॥ ३३ ॥ अन्यरक्तात्समुद्भूतंभैरवाणां
चतुष्टयम् ॥ चंडाद्येककपाल्यंतंख्यातंभुवियथावुधैः ॥ ३४ ॥ भूमिस्थाद्रुधिराज्जातोभैरवःशूलभूषितः ॥ ख्यातोललितराजेतिशोभांजन
समप्रभः ॥३५॥ एवंहिसप्तरूपोऽसौकथ्यतेभैरवोमुने ॥ विघ्नराजोऽष्टमःप्रोक्तोभैरवाष्टकमुच्यते ॥ ३६ ॥ एवंमहात्मनादैत्यःशूलप्रोतोमहा
सुरः ॥ छत्रवद्धारितोव्रह्मन्निंद्रायुधसमप्रभः ॥ ३७ ॥ तदस्नमुल्वणंव्रह्मञ्छूलभेदादवापतत् ॥ येनाकंठंमहादेवोमग्नोऽसौसतमूर्तिमान् ॥
॥ ३८ ॥ ततःस्वेदोभवद्भूरिनिःश्रमाच्छंकरस्यतु ॥ ललाटफलकात्तस्माज्जाताकन्यासृगाप्लुता ॥ ३९ ॥ यद्भूम्यांन्यपतद्विप्रस्वेदविंदुर्वि
नाशनात् ॥ तस्मादंगारपुंजाभोवालकःसमजायत ॥ ४० ॥ सचापितृषितोत्यर्थंपपौरुधिरमांधकम् ॥ कन्याचोत्क्षतसंजाताह्यसृक्चाव
लिहद्द्रुतम् ॥४१॥ ततस्तामाहदेवेशोवालार्कसदृशप्रभः ॥ शंकरोवरदोलोकेश्रेयोर्थंहिवचोमहत् ॥ ४२ ॥ त्वांपूजयिष्यंतिसुरामहर्षिपि
तरस्तथा ॥ यक्षविद्याधराश्चैवमानवाश्चशुभंकरि ॥४३॥ त्वांस्तोष्यंतिनसंदेहोवलिपुष्पोत्करोत्करैः ॥ चर्चिकेतिशुभंनामयस्माद्रुधिरच
र्चिता ॥ ४४ ॥ इत्येवमुक्त्वावरदेनचर्चिकाभूयोऽनुयातागिरिविंध्यवासिनीम् ॥ महींसमंताद्विचचारसुंदरीस्थानंगताहिंगुलकाद्रिमुत्तमम्
॥४५॥तस्यांगतायांवरदःकुजस्यप्रादाद्वरंसर्ववरोत्तमंयत् ॥ ग्रहाधिपत्यंजगतःशुभाशुभंभविष्यतेतेव्यसनंग्रहांतरैः॥४६॥हरोंधकंवर्षसहस्र
मात्रंदिव्यंस्वनेत्रार्कहुताशनेन॥ चकारतंशुष्कवलंत्वशोणितंत्वगस्थिशेषंभगवान्सभैरवः॥४७॥तत्राग्निनाशंभुसमुद्भवेनसमुक्तपापोऽसुररा

इवभूव॥ततःप्रजानांवहुरूपमीशंनाथंहिसर्वस्यचराचरस्य॥४८॥ज्ञात्वाथसर्वेश्वरमीशमव्ययंत्रैलोक्यनाथंवरदंवरेण्यम् ॥ सर्वैःसुराद्यैर्नतमीड्यमाद्यंततोंधकःस्तोत्रमिदंचकार॥४९॥ अंधकउवाच ॥ नमोस्तुतेभैरवभीममूर्तेत्रैलोक्यगोप्त्रेसितशूलपाणे ॥ कपालपाणेभुजगेशहार त्रिणेत्रमांपाहिविपन्नवुद्धिम् ॥ ५० ॥ जयस्वसर्वेश्वरविश्वमूर्तेसुरासुरैर्वंदितपादपीठ ॥ त्रैलोक्यमातर्गुरवेवृषांकभीतःशरण्यंशरणागतोस्मि ॥ ५१ ॥ त्वांनाथदेवाःशिवमीरयंतिसिद्धाहरंस्थाणुमहर्षयश्च ॥ भीमंचयक्षामनुजामहेश्वरंभूतानिभूताधिपमुच्चरंति ॥५२॥ निशाचरास्तूग्रमुपाचरंतिभवेतिपुण्याःपितरोनमस्ते ॥ दासोस्मितुभ्यंहरपाहिमह्यंपापक्षयंमेकुरुलोकनाथ ॥५३॥ भवांस्त्रिदेवस्त्रियुगस्त्रिधर्मात्रिपुष्करश्चासिविभोत्रिणेत्र ॥ त्रय्यारुणिस्त्वंश्रुतिरव्ययात्मापुनीहिमांत्वांशरणंगतोस्मि ॥ ५४ ॥ त्रिणाचिकेतस्त्रिपदप्रतिष्ठःषडंगवित्स्त्रीविषयेष्वलुब्धः ॥ त्रैलोक्यनाथोसिपुनीहिशंभोदासोस्मिभीतःशरणागतस्ते ॥ ५५ ॥ कृतोमहाशंकरतेऽपराधोमयामहाभूतपतेगिरीश ॥ कामारिणानिर्जितमानसेनप्रसादयेत्वांशिरसानतोस्मि ॥ ५६ ॥ पापोहंपापकर्माहंपापात्मापापसंभवः ॥ त्राहिमां देवदेवेशसर्वपापहरोभव॥५७॥ ममनैवापराधोस्तित्वयाचैतादृशोऽप्यहम् ॥ स्पृष्टःपापसमाचारोमांप्रसन्नोभवेश्वर ॥ ५८ ॥ त्वंकर्त्ताचैवधाताचजयत्वंचमहाजय ॥ त्वंमंगल्यस्त्वमोंकारस्त्वमीशानोव्ययोध्रुवः ॥ ५९ ॥ त्वंब्रह्मासृष्टिकृन्नाथस्त्वंविष्णुस्त्वंमहेश्वरः ॥ त्वमिंद्रस्त्वंवषट्कारोधर्मस्त्वंतुषितोत्तमः ॥ ॥ ६० ॥ सूक्ष्मस्त्वंव्यक्तरूपस्त्वंत्वमव्यक्तश्चधीवरः ॥ त्वयासर्वमिदंव्याप्तंजगत्स्थावरजंगमम् ॥ ६१ ॥ त्वमादिरंतोमध्यंचत्वमेवचसहस्रपात् ॥ विजयस्त्वंसहस्राक्षोचित्तपाख्योमहाभुजः ॥ ६२ ॥ अनंतःसर्वगोव्यापीहंसःपुण्याधिकोच्युतः॥ गीर्वाणपतिरव्यग्रोरुद्रःपशुपतिःशिवः॥६३॥ त्रैविद्यस्त्वंजितक्रोधोजितारातिर्जितेंद्रियः॥ जयश्चशूलपाणिस्त्वंपाहिमांशरणागतम् ॥६४॥ पुलस्त्यउवाच ॥इत्थंमहेश्वरो

ब्रह्मन्स्तुतोदैत्याधिपेनतु ॥ प्रीतियुक्तःपिंगलाक्षोहैरण्याक्षमुवाचह॥६५॥प्रीतोस्मिदानवपतेपरितुष्टोस्मिचांधक॥ वरंवरयभद्रंतेयमिच्छसि
ददामितम् ॥ ६६ ॥ अंधकउवाच ॥ अंबिकाजननीमह्यंभवान्वैत्र्यंबकःपिता ॥ वंदामिचरणौमातुर्माननीयौममाधिकम् ॥ ६७ ॥ वरदो
ह्यियदीशानस्तद्यातुविपुलंमम ॥ शारीरंमानसंवापिदुष्कृतंदुर्विचिंतितम् ॥ ६८ ॥ तथामेदानवोभावोव्यपयातुमहेश्वर ॥ स्थिरातुतवभक्ति
श्चवरमेतंप्रयच्छमे ॥ ६९ ॥ महादेव उवाच ॥ एवंभवतुदैत्येंद्रपापंतेयातुसंक्षयम् ॥ मुक्तोसिदैत्यभावाच्चभृंगीगणपतिर्भव ॥ ७० ॥ इत्ये
वमुक्त्वावरदोमुदाग्रादवतार्यतम् ॥ निर्माजयित्वाहस्तेनकृत्वानिर्व्रणमंधकम् ॥ ७१ ॥ ततश्चदेवतादेहाद्ब्रह्मादीनांजुहावसः ॥ तेनिश्चेरु
र्महात्मानोनमस्यंतस्त्रिलोचनम् ॥ ७२ ॥ गणान्सनंदीनाहूयसंनिवेश्यतथाग्रतः ॥ भृंगिणंदर्शयामासब्रुवन्नेषोंधकेतिहि ॥ ७३ ॥ तंदृष्ट्वा
दानवपतिंसंशुष्कपिशितंरिपुम् ॥ गणाधिपत्यमापन्नंप्रशशंसुर्वृषध्वजम् ॥ ७४ ॥ ततस्तान्प्राहभगवान्संपरिष्वज्यदेवताः ॥ गच्छध्वंस्वा
निधिष्ण्यानिभुंजीध्वंत्रिविधंसुखम् ॥ ७५ ॥ सहस्राक्षोपिसंयातुपर्वतंमलयंशुभम् ॥ तत्रस्वकार्यंकृत्वैवपश्चाद्यातुत्रिविष्टपम् ॥ ७६ ॥
इत्येवमुक्त्वात्रिदशान्समाभाष्यव्यसर्जयत् ॥ पितामहंनमस्कृत्यपरिष्वज्यजनार्दनम् ॥ ७७ ॥ महेंद्रोमलयंगत्वाकृत्वाकार्यंदिवंगतः ॥
गतेषुशक्रप्राग्र्येषुभगवान्सास्थितःशिवः ॥ ७८ ॥ विसर्जयामासगणान्तनुमध्यपथाद्धरः ॥ गणाश्चशंकरंदृष्ट्वास्वंस्वंवाहनमास्थिताः॥७९ ॥
जग्मुस्तेशुभलोकांश्चस्वस्वस्थानेषुनारद ॥ यत्रकामदुघागावःसर्वकामफलद्रुमाः ॥ ८० ॥ नद्यस्त्वमृतवाहिन्योह्रदाःपायसकर्दमाः ॥
स्वांस्वांगतिंप्रयातेषुप्रमथेषुमहेश्वरः ॥ ८१ ॥ समादायांधकंहस्तेनंदीशैलंसमागमत् ॥ द्वाभ्यांवर्षसहस्राभ्यांपुनरायाद्धरोगृहम् ॥८२ ॥
ददृशेचगिरेःपुत्रींश्वेतार्ककुसुमास्थिताम् ॥ समायातंनिरीक्ष्यैवसर्वलक्षणसंयुतम् ॥ ८३ ॥ त्यक्त्वार्ककुसुमंतूर्णंसखीस्ताःसमुपाह्वयत् ॥

समाहूताश्चदेव्याभाजयाद्यास्तूर्णमागमन् ॥८४॥ याभिःपरिवृतातस्थौहरदर्शनलालसा ॥ ततस्त्रिणेत्रोगिरिजांदृष्ट्वाह्यंधकदानवम् ॥८५॥
नंदिनंचतथाहर्षादालिंगच्चगिरेःसुताम् ॥ अथोवाचैषदासस्तेकृतोदेविमयांधकः॥८६॥पश्यत्वंप्रतियातंहिस्वसुतंचारुहासिनि ॥ इत्युच्चार्या
हांधकंवैपुत्रएह्येहिसत्वरम्॥८७॥व्रजस्वशरणंमातुरेपाश्रेयस्करीतव ॥ इत्युक्तोविभुनानंदीअंधकश्चगणेश्वरः॥८८॥समागम्यांबिकापादौव
वंदतुरुभावपि ॥ अंधकोपितदागौरींभक्तिनम्रोमहामुने ॥ ८९ ॥ स्तुतिंचक्रेमहापुण्यांपापघ्नींश्रुतिसंमताम् ॥ अंधक उवाच ॥ ॐनम
स्तेऽस्तुभवानीं भूतभव्यप्रियांलोकधात्रीं जनयित्रीं स्कंदमातरं महादेवप्रियां स्यंदिनीं चेतनां त्रैलोक्यमातरं धरित्रीं देवतां मातरं श्रुतिं
स्मृतिं दयां लज्जां कामसूं प्रीतिं सदापावनीं दैत्यसैन्यक्षयकरीं महामायां सुमायां वैजयंतीं शुभां कालरात्रिं गोविंदजननीं शैलराज
पुत्रीं सर्वदेवार्चितां सर्वभूतार्चितां विद्यां सरस्वतीं त्रिणयनमहिषीं नमस्यामि मृडाणी शरण्यां शरणमुपयातोहंनमोनमस्ते॥ ॥ इत्थं
स्तुतासांधकेनपरितुष्टाविभावरी ॥ प्राहपुत्रप्रसन्नास्मिवृणुष्ववरमुत्तमम् ॥ ९० ॥ भृंगिरुवाच ॥ पापंप्रशममायातुत्रिविधंममपार्वति ॥
तथेश्वरेचसततंभक्तिरस्तुममांबिके ॥ ९१ ॥ पुलस्त्यउवाच ॥ वाढमित्यब्रवीद्गौरीहिरण्याक्षसुतंततः ॥ ममाग्रेपूजयन्शर्वंगणानामधिपो
भव ॥ ९२ ॥ वपुर्दधानस्यतथाचतस्यमहेश्वरेणाप्यविरूपदृष्ट्या ॥ कृत्वैवमुच्चैर्भयदंतुभैरवंभृंगित्वमीशेनकृतास्वशक्त्या ॥ ९३ ॥ एत
त्तवोक्तंहरकीर्तिवर्धनंपुण्यंपवित्रंशुभदंमहर्षे ॥ संकीर्तनीयंद्विजसत्तमेषुधर्मायुरारोग्यधनैषिणासदा ॥ ९४ ॥ इतिश्रीवामनपुराणेभैरवप्रादु
र्भावेअंधकवरप्रदानंनामसप्ततितमोऽध्यायः ॥७०॥ ॥ नारदउवाच ॥ ॥ मलयेपिमहेन्द्रेणयत्कृतंद्विजसत्तम ॥ निष्पादितंस्वकंकार्यंतन्मे
त्वंख्यातुमर्हसि ॥ १ ॥ पुलस्त्यउवाच ॥ श्रूयतांयन्महेंद्रेणमलयेपर्वतेमुने ॥ कृतंलोकहितेकार्यमात्मनश्चतथाहितम् ॥२॥ अघासुरस्य

वचनान्मयतारपुरोगमाः ॥ तेनि॰ नाःसुरगणैःपातालगमनोत्सुकाः ॥ ३ ॥ ददृशुर्मलयंविप्रसिद्धैःसेवितकंदरम् ॥ लताविमानसंछन्नंम त्तसत्त्वसमाकुलम् ॥ ४ ॥ चंदनैरुरग॰ नैःसुशीतैरतिसेवितम् ॥ माधवीकुसुमामोदसुगंधितमहागिरिम् ॥ ५ ॥ तंदृष्ट्वाशीतलच्छायंश्रां ताव्यायामकर्शिताः ॥ मयतारपुरोगास्ते॰ वंसमरोचयन् ॥ ६ ॥ तेषुतत्रनिविष्टेषुघ्राणतृप्तिप्रदोनिलः ॥ विवातिशीतःशनकैर्दक्षिणोगं धसंयुतः ॥ ७ ॥ तत्रैवचरतिंचक्रुःसर्वएवमहासु॰ ॥ कुर्वंतोलोकपूज्यानांविद्वेषंसर्ववाससाम्॥८॥ तान्ज्ञात्वाशंकरःशक्रंमलयंप्रैपयत्तदा ॥ सचापिददृशेगच्छन्पथिगोमातरंहरिः ॥९॥ तस्याःप्रदक्षिणांकृत्वादृष्ट्वाशैलंचसुप्रभम् ॥ ददृशेदानवान्सर्वान्संहृष्टान्भोगसंयुतान् ॥१०॥ अ थाजुहाववलहासर्वानेवमहासुरान् ॥ तेचाप्याययुरव्यग्राःकिरंतश्चशरोत्करान् ॥११॥ तानागतान्बाणजालैरथस्थोद्भुतदर्शनः ॥ छादयामा सविप्रर्षेगिरिंदृष्ट्वायथाघनः॥१२॥ततोबाणैरवच्छाद्यमयादीन्दानवान्हरिः॥पाकंजघानतीक्ष्णाग्रैर्मार्गणैःकंकवाससैः ॥१३॥ तत्रनामविभुर्लेभे शासनाच्चशरैर्दृढम् ॥ पाकशासनइत्येवंसर्वामरपतिर्विभुः ॥१४॥ तथान्यंपुरनामानंबाणासुरशतंशरैः ॥ सुपुंखैर्दारयामासततोभूत्सपुरंदरः ॥१५॥हत्वेत्थंसमरेजैपीद्गोत्रभिद्दानवंबलम्॥तच्चापिविजितंब्रह्मन्रसातलमुपागमत्॥१६॥एतदर्थंसहस्राक्षःप्रेपितोमलयाचलम्॥त्र्यंबकेणमु निश्रेष्ठकिमन्यच्छ्रोतुमिच्छसि ॥१७॥ नारदउवाच ॥ किमर्थंदैवतपतिर्गोत्रभित्कथ्यतेहरिः ॥ अयंमेसंशयोब्रह्मन्हृदिसंपरिवर्तते ॥ १८ ॥ पुलस्त्यउवाच ॥ श्रूयतांगोत्रभिच्छक्रःकीर्तितोहियथामया ॥ हतेहिरण्यकशिपौयच्चकाराऽरिमर्दनः ॥ १९ ॥ दितिर्विनष्टपुत्रातुकश्यपं प्राहनारद ॥ विभोनाथोसिमेदेहिशक्रहंतारमात्मजम् ॥ २० ॥ कश्यपस्तामुवाचाथयदित्वमसितेक्षणे ॥ शौचाचारसमायुक्तास्थास्यसे दशतीर्दश ॥ २१ ॥ संवत्सराणांदिव्यानांततस्त्रैलोक्यनायकम् ॥ जनयिष्यसितंपुत्रंशत्रुघ्नंनान्यथाप्रिये ॥ २२ ॥ इत्येवमुक्तासाभर्त्रादि

तिर्नियममास्थिता ॥ गर्भाधानमृषिःकृत्वाजगामोदयपर्वतम् ॥२३॥ गतेतस्मिन्सुरश्रेष्ठःसहस्राक्षोऽपिसत्वरम् ॥ तमाश्रममुपागम्यादितिं
वचनमब्रवीत् ॥ २४ ॥ करिष्याम्यनुशुश्रूषांभवत्यायदिमन्यसे ॥ बाढमित्यब्रवीत्सापिभाविकर्मप्रचोदिता ॥ २५ ॥ समिदाहरणादी
नितस्याश्चक्रेपुरंदरः ॥ विनीतात्माचकार्यार्थीछिद्रान्वेषीभुजंगवत् ॥ २६ ॥ एकदासातपोयुक्ताशोकेमहतिसंस्थिता ॥ दशवर्षशतांते
तुशिरःस्नातातपस्विनी ॥ २७ ॥ जानुभ्यामुपरिस्थाप्यमुक्तकेशीनिजंशिरः ॥ सुष्वापकेशप्रांतेषुसंश्लिष्टचरणाभवत् ॥ २८ ॥ तमंतरम
सौज्ञात्वादेवश्चापिसहस्रदृक् ॥ विवेशमातुरुदरेनासारंध्रेणनारद ॥ २९ ॥ प्रविश्यजठरेवृद्धोदैत्यमातुःपुरंदरः ॥ ददर्शोर्ध्वमुखंबालंकटि
न्यस्तकरंमहत् ॥ ३० ॥ तथैवास्येथददृशेमांसपेशींचवासवः ॥ शुद्धस्फटिकसंकाशाकराभ्यांजगृहेसताम् ॥ ३१ ॥ ततःकोपसमाध्मातो
मांसपेशींशतक्रतुः ॥ कराभ्यांमर्दयामासततःसाकठिनाभवत् ॥ ३२ ॥ ऊर्ध्वेनार्धंचववृधेत्वधोर्धंववृधेतथा ॥ शतपर्वासकुलिशःसंजातोमां
सपेशितः ॥ ३३ ॥ तेनाधिगर्भंदितिजंवज्रेणशतपर्वणा ॥ चिच्छेदसप्तधाब्रह्मन्सचारोदीत्सुविस्तरम् ॥३४॥ ततोप्यबुध्यतदितिरज्ञासीच्छ
क्रचेष्टितम् ॥ शुश्रावववाचंपुत्रस्यरुदतोबालकस्यहि ॥ ३५ ॥ शक्रोपिप्राहमामूढरोदीस्त्वंचातिघर्घरम् ॥ इत्येवमुक्त्वाचैकैकंभूयश्चिच्छे
दसप्तधा ॥ ३६ ॥ तेजातामरुतोनामदेवभृत्याःशतक्रतोः ॥ नानासुखोपचारेणचलंतेतेपुरस्कृताः ॥ ३७ ॥ ततःसकुलिशःशक्रोनिर्ग
त्यजठरात्ततः ॥ दितिंकृतांजलिपुटःप्राहभीतस्तुशापतः ॥ ३८ ॥ ममनैवापराधोयमयमासीदरिर्मम ॥ अतोहतोमयादेवितन्मेनक्रोद्धुम
र्हसि ॥ ३९ ॥ दितिरुवाच ॥ नतवात्रापराधोस्तिमन्येदिष्टमिदंपुरा ॥ संपूर्णेत्वपिकालेवैयोसौवधमुपागतः ॥ ४० ॥ पुलस्त्यउवाच ॥
इत्येवमुक्त्वातान्बालान्परिसांत्व्यदितिंत्वरन् ॥ देवराजःसहैनांस्तुप्रेषयामासभामिनी ॥ ४१ ॥ एवंपुरास्वानपिसोदरान्सगर्भेस्थितान्

पातितवान्भयार्तः ॥ विभेदवज्रेणततःसगोत्रभित्ख्यातोमहर्षेभगवान्महेंद्रः ॥ ४२ ॥ इतिश्रीवामनपुराणेशक्रचरितेमरुदुत्पत्तिर्नामैकस
प्ततितमोऽध्यायः ॥ ७१ ॥ नारदउवाच ॥ ...भवताप्रोक्तामरुतोदितिजोत्तमाः ॥ तेकेचपूर्वंमासन्वैमरुन्मार्गेषुकथ्यताम् ॥ १ ॥
पूर्वंमन्वंतरेचैवसमतीतेषुसत्तम ॥ कत्वासन्वायुमार्गस्थास्तन्मेव्याख्यातुमर्हसि ॥ २ ॥ पुलस्त्यउवाच ॥ श्रूयतांपूर्वमरुतामुत्पत्तिंकथ
यामिते ॥ स्वायंभुवंसमारभ्ययावन्मन्वन्तरंत्विदम् ॥ ३ ॥ स्वायंभुवस्यपुत्रोभून्मनुर्नामप्रियव्रतः ॥ तस्यासीत्सवनोनामपुत्रस्त्रैलोक्यवि
श्रुतः ॥ ४ ॥ सचानपत्योदेवर्षेनृपःप्रेतगतिंगतः ॥ ततोऽरुदत्तस्यपत्नीसुवेदाशोकविह्वला ॥ ५ ॥ नददातितथादग्धुंसमालिंग्यस्थिता
पतिम् ॥ नाथनाथेतिबहुशोविलपंतीत्वनाथवत् ॥ ६ ॥ ततोन्तरिक्षादशरीरिणीवाक्प्रोवाचमाराजपत्नीहरोत्सीः ॥ यदस्तितेसत्यमनुत्तमं
तत्तदाव्रजत्वंपतिनासहाग्निम् ॥७॥ सातांवाणीमंतरिक्षान्निशम्यप्राहक्कांताराजपत्नीसुवेदा ॥ शोचाम्येनंपार्थिवंपुत्रहीनंनैवात्मानंमंदभाग्यं
विहंग ॥ ८ ॥ सोथाब्रवीन्मारुदस्वेतिवालेपुत्रास्तेवैभूमिपालस्यसप्त ॥ भविष्यंतिवह्निमारोहशीघ्रंसत्यंप्रोक्तंश्रद्दधस्वत्वमद्य ॥ ९ ॥
इत्येवमुक्ताखचरेणवालाचितांसमारोप्यपतिंवराहम् ॥ हुताशमासाद्यपतिव्रतासासंचिंतयंतीज्वलनंप्रपन्ना ॥ १० ॥ ततोमुहूर्तान्नृपतिः
श्रियायुतःसमुत्थितोऽसौसहितस्तुभार्यया ॥ खमुत्पपाताथसकामचारीसमंमहिष्याचसुनाभपुत्र्या ॥ ११ ॥ तस्यापरेपार्थिवपुंगवस्यजाता
रजःस्थांमहिषींतुगच्छतः ॥ श्रेष्ठास्तुपुत्रावलवीर्ययुक्ताःख्यातामहांतोभुविभूमिपालाः ॥ १२ ॥ सदिव्ययोगात्प्रतिसंस्थितोंवरेभार्यासं
हायोदिवसांश्चपंच ॥ ततस्तुषष्ठेऽहनिपार्थिवेनऋतुर्नवंध्योद्यभवेद्विचिंत्य ॥ ररामतन्व्यासहकामचारीततोंबरात्प्राच्यवतास्यशुक्रम् ॥
॥ १३ ॥ शुक्रोत्सर्गावसानेतुनृपतिर्भार्ययासह ॥ जगामदिव्ययागत्याब्रह्मलोकंतपोधन ॥ पुत्रास्तस्यावसञ्छूराःकृतास्त्राःसत्यवादिनः ॥

॥ १४ ॥ तदंबरात्प्रचलितमभ्रवर्णंशुक्रंसमादानलिनींचपुष्यती ॥ चित्राविशालाहरितालिनीलाःपत्न्योमुनीनांददृशुर्यथेच्छया ॥ १५ ॥ तद्दृष्ट्वापुष्करेन्यस्तंप्रत्यूचुर्नेतपोधनान् ॥ मन्यमानास्तदमृतंसदायौवनलिप्सया ॥ १६ ॥ ततःस्नात्वातुविधिवत्संपूज्यचनिजान्पतीन् ॥ पतिभिःसमनुज्ञाताःपपुःपुष्करसंज्ञितम् ॥ १७ ॥ तच्छुक्रंपार्थिवेंद्रस्यमन्यमानास्तदामृतम् ॥ पीतमात्रेणशुक्रेणपार्थिवेंद्रोद्भवेनताः ॥ ॥ १८ ॥ ब्रह्मतेजोविहीनास्ताजाताःपत्न्यस्तपस्विनाम् ॥ ततस्तुतत्यजुःसर्वेसदोषास्तेस्वपत्नयः ॥ १९ ॥ सुषुवुःसप्ततनयान्रुदतोभैरवंमुने ॥ तेषांरुदितशब्देनसर्वमापूरितंजगत् ॥ २० ॥ अथाजगामभगवान्ब्रह्मालोकपितामहः ॥ समभ्येत्याब्रवीद्बालान्मारुदध्वंमहाबलाः ॥ २१ ॥ मरुतोनामभवतांभविष्यतिवियत्स्थिरम् ॥ इत्येवमुक्त्वादेवेशोब्रह्मालोकपितामहः ॥ २२ ॥ तानादायवियच्चारीमारुतानादिदेशह ॥ तेत्वासन्मरुतस्त्वाद्येमनोःस्वायंभुवेंतरे ॥ २३ ॥ स्वारोचिषेतुमरुतोवक्ष्यामिशृणुनारद ॥ स्वारोचिषस्यपुत्रस्तुश्रीमान्नाम्नाक्रतुध्वजः ॥ २४ ॥ तस्यपुत्रावभूवुश्चसप्तादित्यपराक्रमाः ॥ तपोर्थंतेगताःशैलंमहामेरुंनरेश्वराः ॥ २५ ॥ आराधयंतोब्रह्माणंपदमैंद्रंयथेप्सवः ॥ ततोविपश्चिन्नामाथसहस्राक्षोभयातुरः ॥ २६ ॥ पूतनांसोप्सरोमुख्यांप्राहनारदवाक्यवित् ॥ गच्छस्वपूतनेशैलंमहामेरुंविलासिनि ॥ २७ ॥ तप्यंतीव्रतहितपक्रतुध्वजसुतामहत् ॥ यथाहितपसोविघ्नंतेषांभवतिसुंदरि ॥ २८ ॥ तथाकुरुष्वमातेषांसिद्धिर्भवतुसुंदरि ॥ ॥ इत्येवमुक्ताशक्रेणपूतनारूपशालिनी ॥ २९ ॥ तत्राजगामत्वरितायत्रैतेस्तप्यतेतपः ॥ आश्रमस्याविदूरेतुनदीमंदोदवाहिनी ॥ ३० ॥ तस्यांस्नातुंसमायाताःसर्वएवसहोदराः ॥ सातुस्नातुंसुचार्वंगीत्ववतीर्णामहानदीम् ॥ ३१ ॥ ददृशुस्तेनृपाःस्नातांततश्चुक्षुभिरेमुने ॥ ततोह्यभ्यद्रवच्छुक्रंतत्पपौजलचारिणी ॥ ३२ ॥ शंखिनीग्राहमुख्यस्यमहाशंखस्यवल्लभा ॥ तेऽतिविभ्रष्टतपसोजग्मूराज्यंचपै

तृकम् ॥ ३३ ॥ साचाप्सराःशक्रमेत्ययथातथ्यंन्यवेदयत् ॥ ततोबहुतिथेकालेसाग्राहीशंखरूपिणी ॥ ३४ ॥ समुद्धृतामहाजालैर्मत्स्यबं
धेनजालिना ॥ सतांदृष्ट्वामहाशंखींस्थलस्थांमत्स्यजीवनः ॥ ३५ ॥ निवेदयामासतदाऋतध्वजसुतेषुवै ॥ तथाभ्येत्यमहात्मानोयोगिनां
योगधारिणः ॥ ३६ ॥ नीत्वासुमंदिरंसर्वैपुरवाप्यांसमुत्सृजन् ॥ ततःक्रमाच्छंखिनीसासुषुवेसप्तवैशिशून् ॥ ३७ ॥ जातमात्रेषुपुत्रेषुमो
क्षमार्गमगाच्चसा ॥ अमातृपितृकाबालाजलमध्येविचारिणः ॥ ३८ ॥ स्तन्यार्थिनोवैरुरुदुरथाभ्यागात्पितामहः ॥ मारुदध्वमितीत्याह
स्वस्थास्तिष्ठतपुत्रकाः ॥ ३९॥ यूयंदेवाभविष्यध्वंवायुस्कंधविचारिणः ॥ इत्येवमुक्त्वाव्यादायसर्वांस्तान्दैवतंप्रति ॥ ४० ॥ नियुज्यच
मरुन्मार्गेविराजोभवनंगतः ॥ एवमाश्वास्यमरुतोमनोःस्वारोचिषेंतरे ॥ ४१ ॥ उत्तमेमरुतोयेचताञ्छृणुष्वतपोधन ॥ उत्तमस्यान्वयेयस्तु
राजासीन्निषधाधिपः ॥४२॥ वपुष्मानितिविख्यातोवपुषाभास्करोपमः ॥ तस्यपुत्रोगुणश्रेष्ठोज्योतिष्मान्धार्मिकोऽभवत् ॥४३॥ सपुत्रार्थी
तपस्तेपेनदींमंदाकिनीमनु ॥ तस्यभार्याचसुश्रोणीदेवाचार्यसुतातथा ॥ ४४ ॥ तपश्चरणयुक्तस्यबभूवपरिचारिका ॥ सानयत्फलपुष्पंच
समित्कुशजलादितत् ॥ ४५ ॥ चकारपद्मपत्राक्षीसम्यक्चातिथिपूजनम् ॥ पतिंशुश्रूषमाणासाकृशाधमनिसंतता ॥ ४६ ॥ तेजोयुक्ता
सुचार्वंगीदृष्टासप्तर्षिभिर्वने ॥ तांतथाचारुसर्वांगींदृष्ट्वाथतपसाकृशाम् ॥ ४७ ॥ पप्रच्छुस्तपसोहेतुंतस्यास्तद्भर्तुरेवच ॥ साब्रवीत्तनयार्था
यआवाभ्यांतपसःक्रिया ॥४८॥ तेचास्यैवरदाब्रह्मज्ञाताःसप्तमहर्षयः ॥ व्रजध्वंतनयाःसप्तभविष्यंतिनसंशयः ॥ ४९ ॥ युवयोर्गुणसंयुक्ता
महर्षीणांप्रसादतः ॥ इत्येवमुक्त्वाजग्मुस्तेसर्वएवमहर्षयः ॥ ५० ॥ सचापिराजर्षिरगात्सभार्योनगरंनिजम् ॥ ततोबहुतिथेकालेसाराज्ञो
महिषीप्रिया ॥ ५१ ॥ अवापगर्भंतन्वंगीतस्मान्नृपतिसत्तमात् ॥ गुर्विण्यामथभार्यायांसममारनराधिपः ॥ ५२ ॥ साचाप्यारोढुमिच्छंती

भर्तारंवैपतिव्रता ॥ निवारितातदामात्यैर्नतथापिप्रतिष्ठति ॥५३॥ समारोप्याथभर्तारंचितायामारुहच्चसा ॥ ततोग्निमध्यात्सलिलमाममेवा पतन्मुने ॥ ५४ ॥ तदंभसासुशीतेनसंसिक्तंसप्तधाभवत् ॥ तेजायंताथमरुतऔत्तमस्यांतरेमनोः ॥ ५५ ॥ तामसस्यांतरेयेचमरुतो ऽथाभवन्पुरा ॥ तानहंकीर्तयिष्यामिगीतवाद्यकलिप्रिय ॥ ५६॥ तामसस्यमनोःपुत्रोदंतध्वजइतिश्रुतः ॥ सपुत्रार्थीजुहावाग्नौस्वमांसंरुधि रंतथा ॥ ५७ ॥ अस्थीनिरोमकेशांश्चस्नायुमज्जायकृद्धनम् ॥ शुक्रंचचित्रकोराजासुतार्थीचेतिनःश्रुतम् ॥ ५८ ॥ सप्तस्वेवार्चिषुततःशुक्र पातादनंतरम् ॥ माप्रक्षिपस्वेत्यभवच्छब्दःसोऽपिमृतोनृपः ॥ ५९ ॥ ततस्तस्माद्धुतवहात्सप्तधातेजसायुताः ॥ शिशवःसमजायंतततेऽरुद न्भैरवंमुने ॥ ६० ॥ तेषांतुध्वनिमाकर्ण्यभगवान्पद्मसंभवः ॥ समागम्यविचार्याथसंचक्रेमरुतःसुरान् ॥ ६१ ॥ तेत्वासन्मरुतोब्रह्मंस्ता मसेदेवतागणाः ॥ येऽभवन्रैवतेतांश्चशृणुचत्वंतपोधन ॥ ६२ ॥ रैवतस्यान्ववायेतुयआसीद्रिपुजिद्धनी ॥ रिपुजिन्नामतःख्यातोनतस्यासी त्सुतःकिल ॥ ६३ ॥ ससमाराध्यतपसाभास्करंतेजसांनिधिम् ॥ अवापकन्यांसुरतिंतांप्रगृह्यगृहंययौ ॥ ६४ ॥ तस्यांपितृगृहेब्रह्मन्वसंत्यां सपितामृतः ॥ सापिदुःखपरीतांगीस्वांतनुंत्यक्तुमुद्यता ॥ ६५ ॥ ततस्तांवारयामासुर्ऋषयःसप्तनारद ॥ तस्यामासक्तचित्तास्तुसर्वएवत पोधनाः ॥ ६६ ॥ अपारयंतीतद्दुःखंप्रज्वाल्याग्निंविवेशह ॥ तेचापश्यंतऋषयस्तच्चित्ताभावितास्तथा ॥ ६७ ॥ तामृतामृषयोदृष्ट्वाकष्टं कष्टेतिवादिनः ॥ प्रजग्मुर्ज्वलनाच्चाथसप्ताजायंतदारकाः ॥६८॥ तेचमात्राविनाभूतारुरुदुस्तान्पितामहः ॥ निवारयित्वाकृतवाँल्लोकनाथो मरुद्गणान् ॥ ६९ ॥ रैवतस्यांतरेजातामरुतोऽमीतपोधन ॥ शृणुत्वंकीर्तयिष्यामिचाक्षुषस्यांतरेमनोः ॥ ७० ॥ आसीन्मंकिरितिख्यात स्तपस्वीसत्यवाक्छुचिः ॥ सप्तसारस्वतेतीर्थेसोऽतप्यतमहत्तपः ॥ ७१ ॥ विघ्नार्थंतस्यतुप्रेषितांदेवाःसंप्रैषयन्मुने ॥ साचाभ्येत्यनदीतीरे

क्षोभयामासभामिनी ॥ ७२ ॥ ततोऽस्यप्राच्यवच्छुकंसप्तसारस्वतेजले ॥ तांचैवाप्यशपन्मूढांमुनिर्मंकणकोरिपुम् ॥ ७३ ॥ गच्छवैवेत्सि मूढेत्वंपापस्यास्यमहत्फलम् ॥ विध्वंसस्तेहिभवितासंप्राप्तेयज्ञकर्माणि ॥ ७४ ॥ एवंशप्त्वाऋषिःश्रीमाञ्जगामाथस्वमाश्रमम् ॥ सरस्वती भ्यः[illegible]भ्यःसप्तवैमरुतोऽभवन् ॥ ७५ ॥ एतत्तवोक्तामरुतोहिपूर्वेजाताजगद्व्याप्तिकरामहर्षे ॥ येषांश्रुतेजन्मनिपातहानिर्भवेच्चधर्माभ्युद योन[illegible]हांश्च ॥ ७६ ॥ इतिश्रीवामनपुरा[illegible]त्पत्तिर्नामद्विसप्ततितमोऽध्यायः ॥ ७२ ॥ पुलस्त्यउवाच ॥ एतदर्थंबलिर्दैत्यःकृतोराजाक लिप्रियः ॥ मंत्रप्रदाताप्[illegible]शुक्रस्तस्यपुरोहितः ॥ १ ॥ ज्ञात्वाभिषिक्तंदैतेयंविरोचनसुतंबलिम् ॥ दिदृक्षवःसमायाताअमराःसर्व एवहि ॥ २ ॥ तानागतान्निरीक्ष्यैवपूजयित्वायथाक्रमम् ॥ पप्रच्छकुलजान्सर्वान्किंनुश्रेयस्करंमम ॥ ३ ॥ ततस्तेप्रोचुरेवैनंशृणुचासुर सुंदर ॥ यत्तेश्रेयस्करंकर्मयदस्माकंहितंतथा ॥४॥ पितामहस्तथैवासीद्बलीदानवपालकः ॥ हिरण्यकशिपुर्वीरःसशक्रोऽभूज्जगत्त्रये॥ ५ ॥ तमागत्यसुरश्रेष्ठोविष्णुःसिंहवपुर्धरः ॥ प्रत्यक्षंदानवेंद्राणांनखैर्विशकलीकृतः ॥ ६ ॥ अवकृष्टश्चराज्यात्सत्र्यंबकेणमहात्मना ॥ अस्मदर्थे महाबाहोशंकरेणत्रिशूलिना॥७॥ तथातवपितान्योपिजंभःशक्रेणघातितः ॥ कुजंभोविष्णुनाचापिप्रत्यक्षंपशुवद्धतः ॥८॥ शंबःपाकोमहेंद्रे णभ्रातातवसुदर्शनः ॥ विरोचनस्तवपितानिहतःकथयामिते ॥ ९ ॥ श्रुत्वागोत्रक्षयंब्रह्मन्कृतंशक्रेणदानवः ॥ उद्योगंकारयामाससहसैवैमहा सुरैः ॥ १० ॥ रथैरन्येगजैरन्येवाजिभिश्चापरेसुराः ॥ पदातयस्तथाप्यन्येजग्मुर्युद्धायदेवताः ॥ ११ ॥ ममाग्रेयातिबलवान्सेनानाथोभयं करः ॥ सैन्यस्यमध्येबलिनःकालनेमिश्चपृष्ठतः ॥ १२ ॥ वामपार्श्वमवष्टभ्यशाल्वःप्रथितविक्रमः ॥ प्रयातिदक्षिणंघोरंतारकाख्योभयं करः ॥ १३ ॥ दानवानांसहस्राणिप्रयुतान्यर्बुदानिच ॥ संप्रयातानियुद्धायदेवैःसहकलिप्रियः ॥१४॥ श्रुत्वासुराणामुद्योगंशक्रःसुरपतिः

सुरान् ॥ उवाचयोगंदैत्यानांयोद्धुंस्वबलसंयुताः ॥ १५ ॥ इत्येवमुक्त्वावचनंसुरराट्स्यंदनंवली ॥ समारुरोहभगवान्यतमातलिवाजिनम् ॥ १६ ॥ समारूढेसहस्राक्षेस्यंदनं देवतागताः ॥ स्वंस्वंवाहनमारुह्यनिश्चेरुर्युद्धकांक्षिणः ॥१७॥ आदित्यावसवोरुद्राःसाध्याविश्वेऽश्विनौ तथा ॥ विद्याधरागुह्यकाश्चयक्षराक्षसपन्नगाः ॥ १८ ॥ राजर्षयस्तथासिद्धानानाभूताश्चसंघशः ॥ गजानन्येरथानन्येहयानन्येसमारुहन् ॥१९॥ विमानानिचशुभ्राणिपक्षिवाह्यानिनारद ॥ समारुह्याद्रवन्सर्वेयतोदैत्यवलंस्थितम् ॥२०॥ एतस्मिन्नंतरेधीमान्वैनतेयःसमागतः ॥ तस्मिन्विष्णुःसुरश्रेष्ठस्त्वधिरूढःसमभ्यगात् ॥२१॥ तमागतंसहस्राक्षस्त्रैलोक्यपतिमव्ययम् ॥ ववंदमूर्ध्नावनतःसहसर्वैःसुरोत्तमैः ॥२२॥ ततोऽग्रेदेवसैन्यस्यकार्तिकेयोगदाधरः ॥ पालयञ्जघनंविष्णुर्यातिमध्यंसहस्रदृक् ॥ २३ ॥ वामंपार्श्वमवष्टभ्यजयंतोवर्ततेमुने ॥ दक्षिणं वरुणःपार्श्वमवष्टभ्यागमद्बली ॥ २४ ॥ ततोऽमराणांपृतनायशस्विनीस्कंदेंद्रविष्णूरुणसूर्यपालिता ॥ नानास्त्रशस्त्रोद्यतदोःसमूहासमाससा दारिबलंमहीध्रे ॥ २५ ॥ उदयाद्रितटेरम्येशुभेसमशिलातले ॥ निर्वृक्षेपक्षिरहितेजातोदेवासुरोरणः ॥ २६ ॥ सन्निधानात्तयोरौद्रःसेनयो रभवन्मुने ॥ महीध्रेशांतरजसितद्दानवबलंमहत् ॥ २७ ॥ अभ्यद्रवंतसहसासमंस्कंदेनदेवताः॥ निजघ्नुर्दानवान्देवाःकुमारभुजपालिताः ॥ ॥ २८ ॥ देवान्निजघ्नुर्दितिजामयगुप्ताःप्रहारिणः ॥ महीधरोत्तमेपूर्वंयथावानरहस्तिनोः॥२९॥ रणरेणूरथोद्धूतःपिंगलोरणमूर्धनि ॥ संध्या नुरक्तःसदृशोमेघःखेसुरतापस ॥ ३० ॥ तदासीत्तुमुलंयुद्धंनप्राज्ञायतकिंचन ॥ श्रूयंतेत्वनिशंशब्दाश्छिंधिभिंधीतिवादिनाम् ॥ ३१ ॥ ततोविशसनोरौद्रोदैत्यानांदैवतैःसह ॥ जातोरुधिरनिष्पंदोरजसःशमनात्मकः ॥ ३२ ॥ शांतेरजसिदेवौघास्तद्दानवबलंमहत् ॥ अभ्यद्र वन्नसहितासमंस्कंदेनधीमता ॥ ३३ ॥ निजघ्नुर्दानवान्देवाःकुमारभुजपालिताः ॥ देवान्निजघ्नुर्दैत्याश्चमयगुप्ताःप्रहारिणः ॥ ३४ ॥ ततो

ऽमृतरसास्वादाद्विनाभूताः सुरोत्तमाः ॥ निर्जिताः समरे दैत्यैः समं सैन्येन नारद ॥३५॥ विनिर्जितान्सुरान्दृष्ट्वा वैनतेयध्वजोऽरिहा ॥ शार्ङ्गमु
द्यम्य बाणौघैर्निजघान ततस्ततः ॥३६॥ विष्णुना हन्यमानास्ते दानवा गरुडोप्यथ ॥ दैतेयाः शरणं जग्मुः कालनेमिं महासुरम् ॥ ३७ ॥ तेभ्यः
स चाभयं दत्त्वा प्रययौ यत्र माधवः ॥ विवृद्धिमगमद्ब्रह्मन्यथा व्याधिरुपेक्षितः ॥ ३८ ॥ यं यं करेण स्पृशति देवं यक्षं सकिन्नरम् ॥ तं तमादाय चि
क्षेप विस्तृते वदने बली ॥ ३९ ॥ संरंभाद्दानवेंद्रोऽन्यमृदत दितिजैः संयुगे देवसैन्यं सेंद्रं सार्कं सचंद्रं करचरणनखैरस्त्रहीनोऽपि वेगात् ॥ चक्रे वैश्वा
नराभैस्त्ववनिगगनयोस्तिर्यगूर्ध्वं समंताद्व्याप्तं कल्पांतवह्नेर्जगदखिलमिदं रूपमासीद्दिधक्षोः ॥४०॥ तं दृष्ट्वा वर्धमानं रिपुमतिबलिनं देवगंध
र्वमुख्याः सिद्धाः साध्याश्च मुख्या भवतरलदृशः प्राद्रवन्दिक्षु सर्वे ॥ पोऽप्ययं ते च दैत्या हरिममरगणैरर्चितं चारुमौलिं नानाशस्त्रास्त्रपातैर्विगलितय
शसं चक्रुरुत्सिक्तदर्पाः ॥ ४१ ॥ तानित्थं प्रेक्ष्य दैत्यान्मयबलिप्रमुखान्कालनेमिप्रधानान्बाणैराकृष्य शार्ङ्गं त्वनवरतमुरोभेदिभिर्वज्र
कल्पैः ॥ कोपादारक्तदृष्टिः सरथगजहयान्दर्पिनिर्धूतवीर्यान्नाराचाख्यैः सुपुंखैर्जलद इव गिरिंश्छादयामास विष्णुः ॥ ४२ ॥ ते बाणैश्छा
द्यमाना हरिकरमुचितैः कालदंडप्रकाशैर्नाराचैरर्धचंद्रैर्बलिमयपुरगा भीतभीतास्त्वरंतः ॥ प्रारंभे दानवेंद्रं शतमखमथनं प्रेक्षयन्कालनेमिं स
प्रायाद्देवसैन्यप्रभुममितबलं केशवं लोकनाथम् ॥ ४३ ॥ दृष्ट्वा तं शतशीर्षमुद्यतगदं शैलेंद्रशृंगाकृतिं विष्णुः शार्ङ्गमपास्य सत्वरमथो जग्राह चक्रं
करे ॥ देवं नैव समेत्य दैत्यविटपप्रच्छेदनं मालिनं प्रोवाचाथ विहस्य तं च सुचिरं मेघस्वनो दानवः ॥ ४४ ॥ अयं स दनपुत्रजिद्दनुजसैन्यवित्रासकृ
द्रिपुः परमकोपनो मम विघातकृत्त्वायुधी ॥ हिरण्यनयनांतको विविधपुष्पपूजारतिः क्वयाति मम गोचरे निपतितः खलोऽसदृशः ॥४५॥ यद्येष संप्र
ति ममाहवमभ्युपैति नूनं न याति निलयं निजमंबुजाक्षः ॥ मन्मुष्टिपिष्टशिथिलांगमुपांतभस्म संद्रक्ष्यते सुरजनो भयकातराक्षः ॥४६॥ इत्येवमु

क्त्वामधुसूदनं वैसकालनेमिः स्फुरिताधरोष्ठः ॥ गदांखगेंद्रोपरिजातरोषोमुमोचशैलेकुलिशंयथेंद्रः ॥ ४७ ॥ तामापतंतींप्रसमीक्ष्यविष्णु
र्घोरांगदांदानवबाहुमुक्ताम् ॥ चक्रेणचिच्छेदसुदुर्गतस्यमनोरथंपूर्वकृतंहिकर्म ॥ ४८ ॥ गदांछित्वातदाविष्णुर्दानवस्यसुदारुणाम् ॥ समुपे
त्यभुजौपीनौसंप्रचिच्छेदवेगवान् ॥ ४९ ॥ भुजाभ्यामथकृत्ताभ्यांविष्णुनाप्रभविष्णुना ॥ कालनेमिस्तथाभातिदग्धःशैलइवापरः ॥
॥ ५० ॥ ततोस्यमाधवःकोपाच्छिरश्चक्रेणभूतले ॥ छित्त्वानिपातयामासपक्वंतालफलंयथा ॥ ५१ ॥ तथाविबाहुर्विशिरामुंडतालोय
थावने ॥ तस्थौमेरुरिवाकंप्यःकवंधःक्ष्माधरेश्वरः ॥ ५२ ॥ तंवैनतेयोप्युरसाखगेंद्रोनिपातयामासमुनेधरण्याम् ॥ यथांबराद्बाहुशिरः
प्रणष्टंधन्यंमहेंद्रःकुलिशेनभूम्याम् ॥ ५३ ॥ तस्मिन्हतेदानवसैन्यपालेसंसाध्यमानास्त्रिदशैश्चदैत्याः ॥ विमुक्तशस्त्रालकवर्मवस्त्राःसंप्राद्र
वन्बाणमृतेसुरेंद्राः ॥ ५४ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेकालनेमिवधोनामत्रिसप्ततितमोऽध्यायः ॥ ७३ ॥ पुलस्त्यउवाच ॥ संनि
वृत्तवलेबाणेदानवाःसत्वरंपुनः ॥ प्रयातादेवतासेनांसशस्त्रायुधलालसाः ॥ १ ॥ विष्णुरप्यमितौजास्तंज्ञात्वाजेयंवलेःसुतम् ॥ प्राहामंत्र्य
सुरान्सर्वान्युध्यध्वंविगतज्वराः ॥ २ ॥ विष्णुनाथसमादिष्टादेवाःशक्रपुरोगमाः ॥ युयुधुर्दानवैःसार्धंविष्णुस्त्वंतरधीयत ॥ ३ ॥ माधवंगत
माज्ञायशुक्रोवलिमुवाचह ॥ गोविंदेनसुरास्त्यक्तास्त्वंजयस्वाधुनावले ॥ ४ ॥ सपुरोहितवाक्येनप्रीतोयातेजनार्दने ॥ गदामादायतेजस्वी
देवसैन्यमभिद्रुतः ॥ ५ ॥ बाणोबाहुसहस्रेणगृह्यप्रहरणान्यथ ॥ देवसैन्यमभिद्रुत्यनिजघानसहस्रशः ॥ ६ ॥ मयोपिमायामास्थायतैस्तैरू
पांतरैर्मुने ॥ योधयामासवलवानमराणांवरूथिनीम् ॥ ७ ॥ विद्युज्जिह्वःपरोभद्रोवृषपर्वासितेक्षणः ॥ विपाकोविक्षरःसैन्यंतेपिदेवानुपाद्रवन् ॥
॥ ८ ॥ तेहन्यमानादितिजैर्देवाःशक्रपुरोगमाः ॥ गतेजनार्दनेदेवेप्रायशोविमुखाभवन् ॥ ९ ॥ तान्प्रभग्नान्सुरगणान्वलिबाणपुरोगमाः ॥

पृष्ठतस्त्वद्रवन्सर्वेत्रैलोक्यविजिगीषवः ॥ १० ॥ संसाध्यमानादैतेयैर्देवाःसेंद्राभयातुराः ॥ त्रिविष्टपंपरित्यज्यब्रह्मलोकमुपागताः ॥ ११ ॥
ब्रह्मलोकंगतेष्वित्थंसेंद्रेष्वपिसुरेषुवै ॥ स्वर्गभोक्तावलिर्जातःसभृत्यसुतबांधवैः ॥ १२ ॥ शक्रोभूद्वलवान्ब्रह्मन्बलिर्बाणोपमोभवत् ॥ वरु
णोभून्मयःसोमोराहुर्ह्रादोमहासुरः ॥ १३ ॥ स्वर्भानुरभवत्सूर्यःशुक्रश्चासीद्बृहस्पतिः ॥ येन्येप्यधिकृतादेवास्तेषुजाताःसुरारयः ॥ १४ ॥
पंचमस्यकलेरादौद्वापरांतेसुदारुणे ॥ देवासुरोभूत्संग्रामोयत्रशक्रोप्यभूद्वलिः ॥ १५ ॥ पातालास्तस्यसप्तासन्वशेलोकत्रयंतथा ॥
भूर्भुवःस्वःपरिख्यातंदशलोकाधिपोवलिः ॥१६॥ स्वर्गेस्वयंनिवसतिभुंजन्भोगान्सुदुर्लभान् ॥ तत्रोपासंतगंधर्वाविश्वावसुपुरोगमाः॥१७॥
तिलोत्तमाद्याह्यप्सरसोनृत्यंतिसुरतापसाः ॥ वादयंतिचवाद्यानियक्षविद्याधरादयः ॥ १८ ॥ त्रैविष्टपानसौभोगंभुजंदैत्येश्वरोवलिः ॥
सस्मारमनसाब्रह्मन्प्रह्लादंसपितामहम् ॥ १९ ॥ संस्मृतश्चसपौत्रेणमहाभागवतोऽसुरः ॥ समभ्यागात्त्वरायुक्तःपातालात्स्वर्ग
मव्ययम् ॥ २० ॥ तमागतंसमीक्ष्यैवत्यक्त्वासिंहासनंवलिः ॥ कृतांजलिपुटोभूत्वाववंदेचरणावुभौ ॥ २१ ॥ पादयोःपतितं
वीरंप्रह्लादस्त्वरितोवलिम् ॥ समुत्थाप्यपरिष्वज्यविवेशपरमासने ॥ २२ ॥ तंवलिःप्राहभोतातत्वत्प्रसादात्सुरामया ॥ निर्जिताःशक्र
राज्यंचहतंवीर्यंवलान्मया ॥ २३ ॥ तदिदंतातमद्वीर्यविनिर्जितसुरोत्तमम् ॥ त्रैलोक्यराज्यंभुंक्ष्वत्वंमयिभृत्येपुरःस्थिते ॥ २४ ॥ ऐरावतः
पुण्ययुतोभविष्यामियथान्वहम् ॥ त्वदंघ्रिपूजाभिरतस्त्वदुच्छिष्टान्नभोजनः ॥ २५ ॥ नसपालयतेराज्यंधृतिर्भवतिसत्तम ॥ नयोनुतिष्ठति
गुरून्शुश्रूषांकुरुतेनयः ॥ २६ ॥ ततस्तदुक्तंवलिनावाक्यंश्रुत्वाद्विजोत्तम ॥ प्रह्लादोवचनंप्राहधर्मकामार्थसाधनम् ॥ २७ ॥ मयाकृतं
राज्यमकंटकंपुराप्रशासितांतःसुहृदोनुपूजिताः ॥ दत्तंयथेष्टंजनितास्तथात्मजाःस्थितोवलेसंप्रतियोगसाधकः ॥ २८ ॥ गृहीतंपुत्रविधि

वन्मयाभूयोर्पितंतव ॥ एवंभवगुरूणांत्वंसदाशुश्रूषणेरतः ॥ २९ ॥ इत्येवमुक्त्वावचनंकरेत्वादायदक्षिणे ॥ शाक्रेसिंहासनेब्रह्मन्वलिंतूर्णं मवेशयत् ॥ ३० ॥ सोपंविष्टोमहेन्द्रस्यसर्वरत्नमयेशुभे ॥ सिंहासनेदैत्यपतिःशुशुभेमघवानिव ॥ ३१ ॥ तत्रोपविष्टश्चैवासौकृतांजलि पुटोवलिः ॥ प्रह्लादंप्राहवचनंमेघगंभीरयागिरा ॥३२॥ यन्मयाताकर्तव्यंत्रैलोक्यंपरिरक्षता ॥ धर्मार्थकाममोक्षेभ्यस्तदादिशतुनोभवान् ॥ ३३ ॥ तद्वाक्यसमकालंचशुक्रःप्रह्लादमब्रवीत् ॥ यद्युक्तंतन्महावाहोवदस्वास्योत्तरंवचः ॥ ३४ ॥ वचनंवलिशुक्राभ्यांश्रुत्वाभागवतोऽ सुरः ॥ प्राहधर्मार्थसंयुक्तंप्रह्लादोवाक्यमुत्तमम् ॥ ३५ ॥ यदायतिक्षमंराजन्वित्तंत्रिभुवनस्यच ॥ अविरोधेनधर्मस्यअर्थस्योपार्जनंचतत् ॥ ३६ ॥ सर्वसत्त्वानुगमनंत्रिवर्गस्यफलंचयत् ॥ परत्रेहचयच्छ्रेयःपुत्रतत्कर्मचाचर ॥ ३७ ॥ यथाश्लाघ्यंप्रयास्यद्ययथाकीर्तिर्भवेत्तव ॥ यथानायशसेयोगस्तथाकुरुमहाद्युते ॥ ३८ ॥ एतदर्थंश्रियंदीप्तांकांक्षंतेपुरुषोत्तमाः ॥ येनैतेचगृहेस्माकंनिवसंतिसुनिर्वृता ॥ ३९ ॥ कुलजोव्यसनेमग्नः सखाज्ञातिवहिष्कृतः ॥ वृद्धोज्ञातिर्गुणीविप्रःकीर्तिश्चयशसासह ॥ ४० ॥ तस्माद्यथैतेनिवसंतिपुत्रंराज्यास्थितस्येहकु लोद्भवस्य ॥ तथायतस्वामलसत्त्वचेष्टयथायशस्वीभवितासिलोके ॥ ४१ ॥ भूम्यांसदाब्राह्मणभूषितायांक्षत्रान्वितायांदृढवापितायाम् ॥ शुश्रूषणासक्तिसमुद्भवायामृद्धिंप्रयांतीहनराधिपेन्द्राः ॥ ४२॥ तस्माद्द्विजाग्र्याःश्रुतिशास्त्रयुक्तानराधिपास्तेप्रतियाजयंतु ॥ यजंतुदिव्यैःक्र तुभिर्द्विजेंद्रायज्ञाग्निधूमेननृपस्यशांतिः ॥ ४३ ॥ तपोध्ययनसंपन्नायजनेध्यापनेरताः ॥ संतुविप्राःक्षत्रपूज्यास्त्वत्तोनुज्ञामवाप्यहि॥४४॥ स्वाध्याययज्ञनिरतादातारःशस्त्रजीविनः ॥ क्षत्रियाःसंतुदैत्येंद्रप्रजापालनधर्मिणः ॥४५॥ यज्ञाध्ययनसंपन्नादातारःकृषिकारिणः ॥ पाशु पाल्यंप्रकुर्वाणावैश्याविपणिजीविनः ॥ ४६ ॥ ब्राह्मणक्षत्रियविशांसदाशुश्रूषणेरताः ॥ शूद्राःसंतुसुरश्रेष्ठतवाज्ञाकारिणःसदा ॥ ४७ ॥

यदावर्णाःस्वधर्मस्थाभवंतिदितिजेश्वराः ॥ धर्मवृद्धिस्तदास्याद्वैधर्मवृद्धौनृपादयः ॥ ४८ ॥ तस्माद्वर्णाःस्वधर्मस्थास्त्वयाकार्याःसदाबले॥ तद्वृद्धौभवतोवृद्धिस्तद्धानौहानिरुच्यते ॥ ४९ ॥ इत्थंवचःश्राव्यनराधिपेंद्रोवलिर्महात्मासबभूवतूष्णीम् ॥ ततोयदाज्ञापयसेकरिष्यइत्थं वलिःप्राहवचोमहर्षे ॥ ५० ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेचतुःसप्ततितमोऽध्यायः ॥ ७४ ॥ ॥ पुलस्त्यउवाच ॥ ततोगतेषुदेवेषु ब्रह्मलोकंतपोधन ॥ त्रैलोक्यंपालयामासवलिर्धर्मोन्वितःसदा ॥ १ ॥ कलिस्तदाधर्मयुतंजगद्दृष्ट्वाकृतेयथा ॥ ब्रह्माणंशरणंभेजेस्वभावस्य निषेधनात् ॥ २ ॥ गत्वासदद्दशेदेवंसेंद्रंदेवैःसमन्वितम् ॥ स्वदीप्त्याद्योतयंतंचस्वदेशंससुरासुरम् ॥ ३ ॥ प्रणिपत्यतमाहाथकलिर्ब्रह्माण मीश्वरम् ॥ ममस्वभावोवलिनानाशितोदेवसत्तम॥४॥तंप्राहभगवान्ब्रह्मास्वभावंजगतोऽपिहि ॥ नकेवलंहिभवतोहृतस्तेनबलीयसा ॥ ५ ॥ पश्यस्युत्तिष्ठदेवेंद्रंवरुणंसहमारुतम्॥भास्करोपिहिदीनत्वंप्रयातोहिवलाद्बलेः॥६॥नतस्यकश्चित्त्रैलोक्येप्रतिषेद्धास्तिकर्मणः ॥ ऋतेसहस्र शिरसंहरिंदशशतांघ्रिकम्॥७॥सभूमिंचतथानाकंराज्यंलक्ष्मींयशोवलम् ॥ समाहरिष्यतिवलिःकर्तासौधर्मगोचरम् ॥८॥ इत्येवमुक्तोदेवेन ब्रह्मणाकलिरव्ययः ॥ दीनान्दृष्ट्वासशक्रादीन्बिभीतकवनंगतः ॥ ९ ॥ कृतंप्रावर्तततदाकलिर्नासीज्जगत्त्रये॥ धर्मोभवच्चतुष्पादश्चातुर्वर्ण्ये पिनारद ॥ १० ॥ तपोऽहिंसाचसत्यंचशौचमिंद्रियनिग्रहः ॥ दयादानंत्वानृशंस्यंशुश्रूषायज्ञकर्मच ॥ ११ ॥ जगंत्येतानिसर्वाणिपरिव्या प्यस्थितानिहि ॥ बलाद्धिचलितोब्रह्मंस्तुष्टोपिहिकृतःकृतः ॥ १२ ॥ स्वधर्मस्थायिनोवर्णाआश्रमांश्चाविशन्द्विजाः ॥ प्रजापालनधर्मस्थाः सदैवमनुजर्षभाः ॥ १३ ॥ धर्मोत्तरेवर्तमानेब्रह्मन्नस्मिञ्जगत्त्रये ॥ त्रैलोक्यलक्ष्मीरगमत्तदानींदानवेश्वरम् ॥ १४ ॥ तमागतांनिरीक्ष्यैवसह स्राक्षश्रियंवलिः ॥ पप्रच्छकासिमांब्रूहिकेनाप्यर्थेनचागता ॥ १५ ॥ सातद्वचनमाकर्ण्यतदाश्रीःपद्ममालिनी ॥ वलेशृणुचयस्मात्त्वामा

यातामहिषीवलात् ॥ १६ ॥ अप्रतर्क्यंवलोदेवोयोसौचक्रगदाधरः ॥ तेनत्यक्तस्तुमघवांस्ततोहंत्वामिहागता ॥ १७ ॥ सनिर्ममेयुवत्यस्तु
चतस्रोरूपसंयुताः ॥ श्वेतांवरधराचैवश्वेतस्रगनुलेपना ॥ १८ ॥ श्वेतवृंदारकारूढासत्त्वाढ्याश्वेतविग्रहा ॥ रक्तांवरधराचान्यारक्तस्रगनुले
पना ॥ १९ ॥ रक्तवाजिसमारूढारक्तांगीराजसीहिसा ॥ पीतांवरापीतवर्णापीतस्रगनुलेपना ॥ २० ॥ सौवर्णस्यंदनारूढातामसंगुणमा
श्रिता ॥ नीलांवरानीलमाल्यानीलगंधालिसप्रभा ॥ २१ ॥ नीलवृषसमारूढात्रिगुणासाप्रकीर्तिता ॥ यासाश्वेतांवराश्वेतासत्त्वाढ्याकुंजर
स्थिता ॥ २२ ॥ साब्रह्मणंसमायाताचन्द्रचंद्रानुगानपि ॥ यासारक्तारक्तवासावाजिस्थारजसान्विता ॥२३॥ तांप्रादाद्देवराजायमनवेतत्सु
तायच ॥ पीतांवरायासुभगारथस्थाकनकप्रभा ॥ २४ ॥ प्रजापतिभ्यस्तांप्रादाच्छक्रायचविशत्सुच ॥ नीलवस्त्रालिसदृशायाचतुर्थीवृष
स्थिता ॥ २५ ॥ सादानवान्नैर्ऋतांश्चशूद्रान्विद्याधरानपि ॥ विप्राद्याःश्वेतरूपांतांकथयंतिसरस्वतीम् ॥ २६ ॥ स्तुवंतिब्रह्मणासार्धंमखे
मंत्रादिभिःसदा ॥ क्षत्रियारक्तवर्णांतांजयश्रींचशशंसिरे ॥ २७ ॥ साचंद्रेणसुरश्रेष्ठमनुनाचयशस्विनी ॥ वैश्यास्तांपीतवसनांकनकां
गींसदैवहि ॥ २८ ॥ स्तुवंतिलक्ष्मीमित्येवप्रजापालास्तथैवहि ॥ शूद्रास्तांनीलवर्णांगींस्तुवंतिहिसुभक्तितः ॥ २९ ॥ प्रियदेवीतिना
म्नातांसदैत्यैराक्षसैस्तथा ॥ एवंविभक्तास्तानार्यस्तेनदेवेनचक्रिणा ॥ ३० ॥ एतासांचस्वरूपस्थास्तिष्ठंतिनिधयोऽव्ययाः ॥ इतिहासपु
राणानिवेदाःसांगास्तथोक्तयः ॥ ३१ ॥ चतुःषष्टिकलाश्वेतामहापद्मोनिधिःस्थितः ॥ रत्नानिस्वर्णरजतंगजाश्वरथभूषणम् ॥ ३२ ॥
शस्त्रास्त्रादिकवस्तूनिरक्तापद्मोनिधिःस्मृतः ॥ गोमहिष्यःखरोष्ट्राश्चसुवर्णांवरभूमयः ॥ ३३ ॥ औषध्यःपशवःपीतामहानीलोनिधिः
स्थितः ॥ सर्वासामपिजातीनांजातिरेकाप्रतिष्ठिता ॥ ३४ ॥ अन्येषामपिसंहर्त्रीनीलाशंखोनिधिःस्थितः ॥ एताभिश्चस्थितानांचयानिरू

पाणिदानव ॥ भवंतिपुरुषाणां वैतान्निबोधवदामिते ॥ ३५ ॥ सत्यशौचाभिसंयुक्तावलदानोत्सवेरताः ॥ भवंतिदानवपतेमहापद्मा
श्रितानराः ॥ ३६ ॥ यज्विनोसुभगाहृष्टामालिनोबहुदक्षिणाः ॥ सर्वसामान्यसुखिनोनराःपद्माश्रिताःस्थिताः ॥ ३७ ॥ सत्यानृतस
मायुक्तादानाशरणयज्विनः ॥ न्यायान्यायव्ययोपेतामहानीलाश्रितानराः ॥ ३८ ॥ नास्तिकाःशौचरहिताःकृपणाभोगवर्जिताः ॥ स्ते
यानृतकथायुक्तानराःशंखाश्रितावले ॥ ३९ ॥ इत्येवंकथितस्तुभ्यमासांदानवनिर्णयः ॥ ४० ॥ अहंसारागिणीनामजयश्रीस्त्वासुपागता॥
ममास्तिदानवपतेप्रतिज्ञासाधुसंमता ॥ ४१ ॥ समाश्रयामिशौर्याढ्यंनचक्रीवंकथंचन ॥ नचास्तितवतुल्योन्यस्त्रैलोक्येपिवलान्वितः ॥
॥ ४२ ॥ त्वयावलवताराजन्प्रीतिर्मेजनिताध्रुवा ॥ यत्त्वयायुधिविक्रम्यदेवराजोविनिर्जितः ॥४३॥ अतोमेपरमप्रीतिर्जातादानवशाश्वती ॥
दृष्ट्वातेपरमंसत्त्वंसर्वेभ्योपिवलाधिकम् ॥४४॥ शौंडीर्यमानिनंवीरंततोहंस्वयमागता ॥ नाश्चर्यंदानवश्रेष्ठहिरण्यकशिपोःकुले ॥४५॥ प्रसूत
स्यासुरेंद्रस्यतवकर्मयदीदृशम् ॥ विशेषितस्त्वयाराजन्दैतेयःप्रपितामहः ॥ ४६ ॥ विजितंचक्रमाद्येनत्रैलोक्यंवैपरैर्हृतम् ॥ इत्येवमुक्त्वा
वचनंदानवेंद्रंजगन्मयी ॥ ४७ ॥ जयश्रीश्चन्द्रवदनाप्रविष्टाद्योतयच्छुभा ॥ तस्यांचैवप्रविष्टायांविधवाइवयोषितः ॥ ४८ ॥ समाश्रयंति
वलिनंह्रीःकिर्तिर्द्युतिरेवच ॥ प्रभागतिःक्षमाभूतिर्विद्यानीतिर्दयामतिः ॥ ४९ ॥ श्रुतिःस्मृतिर्वलंकीर्तिर्धृतिःशांतिःक्रियाद्विज ॥ पुष्टिस्तुष्टि
स्तथाचान्यासत्त्वश्रियमवास्थिता ॥ सर्वावलिंसमाश्रित्यविश्राम्यंतियथासुखम् ॥ ५० ॥ एवंगुणोभूद्दनुपुंगवोसौवलिर्महात्माशुभबुद्धिरा
त्मवान् ॥ यज्वातपस्वीमृदुरेवसत्यवाग्दाताविभर्तास्वजनान्सुगोप्ता ॥५१॥ त्रिविष्टपंशासतिदानवेन्द्रेनासीत्क्षुधार्तोमलिनोनदीनः ॥ सदो
ज्ज्वलोधर्मरतोथदांतःकामोपभोगीमनुजोऽपिजातः ॥ ५२ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेपंचसप्ततितमोऽध्यायः ॥ ७५ ॥ ॥

पुलस्त्यउवाच ॥ गतेत्रैलोक्यराज्येतुदानवेषुपुरंदरः ॥ जगामब्रह्मसदनंसहदेवैःशचीपतिः ॥ १ ॥ तत्रापश्यत्तुदेवेशंब्रह्माणंकमलोद्भवम् ॥ ऋषिभिःसार्धमासीनंपितरंस्वंचकश्यपम् ॥ २ ॥ ततोननामशिरसाशक्रःसुरगणैःसह ॥ ब्रह्माणंकश्यपंचैवतांस्तुसर्वांस्तपोधनान् ॥ ३ ॥ प्रोवाचेंद्रःसुरैःसार्धं देवनाथंपितामहम् ॥ पितामहहृतंराज्यंवलिनावलिनामम ॥ ४ ॥ ब्रह्माप्रोवाचशक्रैतद्भुज्यतेहिकृतंफलम् ॥ शक्रः पृच्छतिभोब्रूहिकिंमयादुष्कृतंकृतम् ॥ ५ ॥ कश्यपोप्याहदेवेशभ्रूणहत्याकृतात्वया ॥ त्वयागर्भोदित्युदरात्कृत्तोहिवहुधावलात् ॥ ६ ॥ पितरंप्राहदेवेंद्रःसमातुर्दोषतोविभो ॥ तन्नूनंप्राप्तवान्गर्भोयदशौचाहिंसाभवत् ॥७॥ ततोब्रवीत्कश्यपस्तुमातुर्दोषःसदासताम् ॥ गतस्ततोपिनिहतोदासोपिकुलिशेनते ॥ ८ ॥ तच्छ्रुत्वाकश्यपवचःप्राहशक्रःपितामहम् ॥ विनाशंपाप्मनोब्रूहिप्रायश्चित्तंप्रभोमम ॥ ९ ॥ ब्रह्माप्रोवाचदेवेशंवसिष्ठःकश्यपस्तथा ॥ सर्वस्यजगतश्चापिशक्रस्यापिविशेषतः ॥ १० ॥ शंखचक्रगदापाणिर्माधवःपुरुषोत्तमः ॥ तंप्रपद्यस्व शरणंसतेसर्वंविधास्यति ॥ ११ ॥ सहस्राक्षोपिवचनंगुरूणांसंनिशम्यवै ॥ प्रोवाचस्वल्पकालेनकश्चिद्दृष्टोमहोदयः ॥ १२ ॥ इत्येवमुक्तः सुरराड्विरिंचिनामरीचिपुत्रेणचकश्यपेन ॥ तथैवमित्रावरुणात्मजेनवेगान्महीपृष्ठमवाप्यतस्थौ ॥ १३ ॥ कालंजरस्योत्तरतःसुपुण्यस्तथा हिमाद्रेरपिदक्षिणस्थः ॥ कुशस्थलात्पूर्वतएवविश्रुतोवसोःपुरात्पश्चिमतोवतस्थे ॥१४॥ पूर्वंगयेनक्षितिपेनयत्रइष्टोश्वमेधःशतशःसुदक्षिणः॥ सुनुष्यमेधोपिसहस्रकृत्वस्तथापुरादुर्जयनःसुरारिभिः ॥ १५ ॥ ख्यातोमहामेधइतिप्रसिद्धोयथास्यचक्रेभगवान्मुरारिः॥ द्वाःस्थत्वमव्यक्ततनुःसुमूर्तिःख्यातिजगामाथगदाधरेति॥१६॥यस्मिन्द्विजेंद्राःश्रुतिशास्त्रवर्जिताःसमत्वमायांतिपितामहेन॥ यस्मिन्भक्त्यापूजयन्येपितॄन्स्वान्सोनन्यभावेनसकृत्तुचेतसा ॥ फलंमहामेधमखस्यमानवादधत्यनंतंभगवत्प्रसादात् ॥ १७ ॥ महानदीयत्रसुरर्षिकन्याजलापदेशाद्धिमशै

लमेत्य ॥ चक्रेजगत्पापविमुक्तमग्र्याःसंदर्शनप्राशनमज्जनेन ॥ १८ ॥ तत्रशक्रःसमभ्येत्यमहानद्यास्तटेद्भुते ॥ आराधनायदेवस्यकृत्वा
श्रममवस्थितः ॥१९॥ प्रातःस्नायीत्वधःशायीएकभुक्तोप्ययाचितः ॥ तपस्तेपेसहस्राक्षःस्तुवन्देवंगदाधरम् ॥२०॥ तस्यैवंतप्यतःसम्यक्
जितसर्वेन्द्रियस्यतु ॥ कामक्रोधविहीनस्यसाग्रःसंवत्सरोगतः ॥२१॥ ततोगदाधरःप्रीतोवासवंप्राहनारद ॥ गच्छप्रीतोस्मिभवतोमुक्तपापो
सिसांप्रतम् ॥ २२ ॥ निजंराज्यंचदेवेशप्राप्स्यसेनचिरादिव ॥ यतिष्यामितथाशक्रभाविश्रेयोयथातव ॥२३॥ इत्येवमुक्तेनगदाधरेणविस
र्जितःस्नातिमनोहरायाम्॥स्नातस्यदेवस्यतदैनसोनरास्तंप्रोचुरस्माननुशासयस्व ॥ २४॥ प्रोवाचतान्भीषणकर्मकारान्नाम्नापुलिंदान्ममपा
पसंभवाः ॥ वसध्वमेवांतरमद्रिमुख्ययोर्हिमाद्रिकालंजरयोःपुलिंदाः ॥ २५ ॥ इत्येवमुक्त्वासुरराट्पुलिंदान्विमुक्तपापोऽमरसिद्धयक्षैः ॥
संपूज्यमानोनुजगामचाश्रमंमातुस्तदाधर्मनिवासमीड्यम् ॥ २६ ॥ दृष्ट्वादितिंमूर्ध्निकृतांजलिस्तुविनम्रमौलिःसमुपाजगाम ॥ प्रणम्यपादौ
कमलोदराभौनिवेदयामासतदातदात्मनः ॥ २७ ॥ पप्रच्छसाकारणमीश्वरंतमाघ्रायचालिंग्यमुदासुदृष्ट्या ॥ वक्ष्येसुराणांसबलेःपराजयं
तदात्मनोदेवगणैश्चसार्द्धम् ॥ २८ ॥ श्रुत्वैवसाशोकपरिप्लुतांगीज्ञात्वाजितंदैत्यसुतैःसुतंतम् ॥ दुःखान्वितादेवमनाद्यमीड्यंजगामविष्णुंश
रणंवरेण्यम् ॥ २९ ॥ नारदउवाच ॥ कस्मिन्जनित्रीसुरसत्तमानांस्थानेहृषीकेशमनंतमाद्यम् ॥ चराचरस्यप्रभवंप्रमाणमाराधयामासमुने
वदस्व ॥ ३० ॥ पुलस्त्यउवाच ॥ सुरारणिःशक्रमवेक्ष्यदीनंपराजितंदानवनायकेन ॥ सितेऽथपक्षेमकरर्क्षगेऽर्केघृतार्चिषस्यादथसप्तमे
ऽहनि ॥ ३१ ॥ दृष्ट्वैवदेवंत्रिदशाधिपंतंमहोदयेशक्रदिशाधिरूढम् ॥ निराशनासंयतवाक्सुचित्तातदोपतस्थेशरणंसुरेंद्रम् ॥ ३२ ॥ अदिति
रुवाच ॥ जयस्वदिव्यांबुजकोशचौरजयस्वसंसारतरोःकुठार ॥ जयस्वपापेंधनजातवेदअघौघसंरोधनमोनमस्ते ॥ ३३ ॥ नमोऽस्तुतेभ्यः

स्करदिव्यमूर्तेत्रैलोक्यलक्ष्मीपतयेनमस्ते ॥ त्वंकारणंसर्वचराचरस्यनाथोसिमांपालयविश्वमूर्ते ॥ ३४ ॥ त्वयाजगन्नाथजगन्मयेननाथेन शक्रोनिजराज्यहानिम् ॥ अवाप्तवान्शक्रपराभवंचततोभवंतंशरणंप्रपन्ना ॥ ३५ ॥ इत्येवमुक्त्वासुरपूजितेनआलिप्यरक्तेनहिचंदनेन ॥ संपूजयित्वाकरवीरपुष्पैःसधूपदीपैःखलुदिव्यभोज्यैः ॥३६॥ नैवेद्यकंचैवाज्ययुतंमहार्हमन्नंह्युपेंद्रस्यहितायदेवी ॥ स्तवेनपुण्येनचसंस्तुवंतीस्थितानिराहारमथोपवासम् ॥ ३७ ॥ ततोद्वितीयेन्हिकृतप्रणामास्नात्वाविधानेनचपूजयित्वा ॥ दत्त्वाद्विजेभ्यःकनकंतिलाज्यंततोग्रतःसाप्रयतावभूव ॥ ३८ ॥ ततःप्रीतोभवद्भानुर्घृतार्चिःसूर्यमंडलात् ॥ विनिःसृत्याग्रतःस्थित्वाइदंवचनमब्रवीत् ॥ ३९ ॥ व्रतेनानेनसुप्रीतस्तवाहंदक्षनंदिनि ॥ प्राप्स्यसेदुर्लभंकामंमत्प्रसादान्नसंशयः ॥ ४० ॥ राज्यंत्वत्तनयानांवैदास्येदेविसुरारणि ॥ दानवान्ध्वंसयिष्यामिसंभूयैवोदरेतव ॥ ४१ ॥ तद्वाक्यंवासुदेवस्यश्रुत्वाब्रह्मन्सुरारणिः ॥ प्रोवाचजगतांयोनिंवेपमानापुनःपुनः ॥ ४२ ॥ कथंत्वासुदरेणाहंवोढुंशक्ष्यामिदुर्धरम् ॥ यस्योदरेजगत्सर्वंवसेत्स्थावरजंगमम् ॥ ४३ ॥ कस्त्वांधारयितुंनाथशक्तस्त्रैलोक्यधार्योसि ॥ यस्यसप्तार्णवाःकुक्षौनिवसंतिसहाद्रिभिः ॥४४॥ तस्माद्यथासुरपतिःशक्रःस्यात्सुरराडिह ॥ यथावृथानमेक्लेशस्तथाकुरुजनार्दन ॥ ४५ ॥ विष्णुरुवाच ॥ सत्यमेतन्महाभागेदुर्धरोस्मिसुरासुरैः ॥ तथापिसंभविष्यामिह्यहंदेव्युदरेतव ॥ ४६ ॥ आत्मानंभुवनंशैलांस्त्वांचदेविसकश्यपाम् ॥ धारयिष्यामियोगेनमाविषादंकृथावृथा ॥ ४७ ॥ तवोदरेह्यहंदाक्षेसंभविष्यामिवैयदा ॥ तदानिस्तेजसोदैत्याःसंभविष्यंत्यसंशयम् ॥ ४८ ॥ इत्येवमुक्त्वाभगवान्सदेवस्तस्याश्चभूयोरिगणप्रमर्दी ॥ स्वतेजसांगेषुविवेशदेव्यास्तदोदरेशक्रहितायविप्राम् ॥ ४९ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेदितिवरप्रदानंनामषट्सप्ततितमोऽध्यायः ॥ ७६ ॥ पुलस्त्यउवाच ॥ देवमातुःस्थितेदेवेउदरेवामनाकृतौ ॥ निस्तेजसोऽसुरा

जातायथोक्तंविश्वयोनिना ॥ १ ॥ निस्तेजसोऽसुरान्दृष्ट्वाप्रह्लादंदानवेश्वरम् ॥ बलिर्दानवशार्दूलंत्विदंवचनमब्रवीत् ॥ २ ॥
बलिरुवाच ॥ तातनिस्तेजसोदैत्याःकेनजातास्तुहेतुना ॥ कथ्यतांपरमज्ञोसिशुभाशुभविशारद ॥ ३ ॥ पुलस्त्यउवाच ॥
तत्पौत्रवचनंश्रुत्वामुहूर्तंध्यानमास्थितः ॥ किमर्थंतेजसोहानिरितिकस्मादतीवबा ॥ ४ ॥ सज्ञात्वावासुदेवोत्थंभयंदैत्येष्वनुत्तमम् ॥ चिंत
यामासयोगात्माक्वविष्णुःसांप्रतंस्थितः ॥ ५ ॥ अधोनाभेःसपातालान्सप्तसंचिंत्यनारदः ॥ नाभेरुपरिभूरादीन्लोकांश्चक्रमशोवशी ॥ ६ ॥
भूमिंतांपंकजाकारांतन्मध्येपंकजाकृतिम् ॥ मेरुंददर्शशैलेन्द्रंशातकुंभमहर्धिमत् ॥ ७ ॥ तस्योपरिमहापुर्यस्त्वष्टौलोकपतींस्तथा ॥ तेषा
मुपरिवैराजंददर्शब्रह्मणःपुरम् ॥ ८ ॥ तदधस्तान्महापुण्यमाश्रमंसुरपूजितम् ॥ देवमातुःसदर्शमृगपक्षिगणावृतम् ॥ ९ ॥ तांदृष्ट्वादेव
जननींसर्वतेजोधिकांमुने ॥ विवेशदानवपतिरन्वेष्टुंमधुसूदनम् ॥ १० ॥ सदृष्ट्वाजगन्नाथंमाधवंवामनाकृतिम् ॥ सर्वभूतवरेण्यंतंदेवमातु
रथोदरे ॥ ११ ॥ तंदृष्ट्वापुंडरीकाक्षंशंखचक्रविनाकृतम् ॥ सुरासुरगणैःसर्वैःसर्वतोव्याप्तविग्रहम् ॥ १२ ॥ ततस्तेनैवयोगेनदृष्ट्वावामनतां
गतम् ॥ दैत्यतेजोहरंविष्णुंप्रकृतिस्थोभवत्ततः ॥ १३ ॥ अथोवाचमहाबुद्धिर्विरोचनसुतंबलिम् ॥ प्रह्लादोमधुरंवाक्यंप्रणम्यमधुसूदनम्
॥ १४ ॥ प्रह्लादउवाच ॥ श्रूयतांसर्वमाख्यास्येयतोवोभयमागतम् ॥ येननिस्तेजसोदैत्याजातादैत्येंद्रहेतुना ॥ १५ ॥ भवतानिर्जितादेवाः
सेंद्ररुद्रार्कपावकाः ॥ प्रयाताःशरणंदेवंहरिंत्रिभुवनेश्वरम् ॥ १६ ॥ सतेषामभयंदत्त्वाशक्रादीनांजगद्गुरुः ॥ अवतीर्णोमहाबाहुरुपित्वाजठ
रेहरिः ॥ १७ ॥ हृतानिवस्तेनबलेतेजांसीतिमतिर्मम ॥ नालंतमोविषहितुंशक्रंसूर्योदयंबले ॥ १८ ॥ पुलस्त्यउवाच ॥ प्रह्लादवचनंश्रुत्वा
क्रोधेनस्फुरिताधरः ॥ प्रह्लादमाहचबलिर्भाविकर्मप्रचोदितः ॥ १९ ॥ बलिरुवाच ॥ तातकोयंहरिर्नामयतोनोभयमागतम् ॥ संतिमेशत

शोदैत्यावासुदेवबलाधिकाः ॥ २० ॥ सहस्रशोजितायैस्तुसेंद्ररुद्राग्निमारुताः ॥ निर्जित्यत्याजिताःस्वर्गंभग्नदर्पारणाजिरे ॥ २१ ॥ येन सूर्यरथाद्वेगाच्चक्रंकृष्टंमहाजवम् ॥ सविप्रचित्तिर्नलवान्ममसैन्यपुरस्सरः ॥ २२ ॥ अयःशंकुःशिविःशंकुरसिलोमाविरूपधृक् ॥ त्रिशिराम करांक्षश्चवृषपर्वासितेक्षणः ॥ २३ ॥ एतेचान्येचवलिनोनानाशस्त्रविशारदाः ॥ येषामेकैकशोविष्णुःकलांनार्हतिषोडशीम् ॥ २४ ॥ पुल स्त्यउवाच ॥ पुत्रस्यैतद्वचःश्रुत्वाप्रह्लादःक्रोधमूर्छितः ॥ धिग्धिगित्याहसवलिंवैकुंठाक्षेपवादिनम् ॥ २५ ॥ धिक्त्वांपापसमाचारदुष्टबुद्धे सुवालिश ॥ हरिंनिंदयतोजिह्वाकथंनपतितातव ॥ २६ ॥ शोच्यस्त्वमसिदुर्बुद्धेनिंदनीयश्चसाधुभिः ॥ यत्त्रैलोक्यगुरुंविष्णुमभिनिंदसि दुर्मते ॥ २७ ॥ शोच्यश्चापिनसंदेहोयेनजातःपितातव ॥ यस्यत्वंकर्कशःपुत्रोजातोदेवावमानकृत् ॥२८॥ भवान्किलविजानातितथाचामी महासुराः॥यथानान्यःप्रियःकश्चिन्ममतस्माज्जनार्दनात् ॥२९॥ जानन्नपिप्रियतरंममदेवंजनार्दनम्॥सर्वेश्वरेश्वरंदेवंकथंनिंदितवानसि॥३०॥ गुरुःपूज्यस्तत्रपितापूज्यस्तस्याप्यहंगुरुः ॥ ममापिपूज्योभगवान्गुरुर्लोकगुरुर्हरिः ॥ ३१ ॥ गुरोर्गुरुगुरुंमूढपूज्यंपूज्यतमस्यच ॥ पूज्यंनिंद सियत्पापकथंनपतितोस्यधः ॥ ३२॥ शोचनीयादुराचारादानवामीकृतास्त्वया ॥ येषांत्वंकर्कशोराजावासुदेवविनिंदकः ॥ ३३ ॥ यस्मा त्पूज्योर्चनीयश्चभवतानिंदितोहरिः ॥ तस्मात्पापसमाचारराज्यनाशमवाप्नुहि ॥ ३४ ॥ यथानान्यत्प्रियतरंविद्यतेममकेशवात् ॥ मनंसा कर्मणावाचाराज्यभ्रष्टस्तथापत ॥ ३५ ॥ यथानतस्मादपरंव्यतिरिक्तंहिविद्यते ॥ चतुर्दशसुलोकेषुराज्यभ्रष्टस्तथापत ॥ ३६ ॥ सर्वेषाम पिभूतानांनान्यल्लोकेपरायणम् ॥ यथातथानुपश्येयंभवंतंराज्यविच्युतम् ॥ ३७ ॥ पुलस्त्यउवाच ॥ एवमुच्चरितेवाक्येवलिःसत्वरित स्तदा ॥ अवतीर्यासनाद्ब्रह्मन्कृतांजलिपुटोवलिः॥३८॥शिरसाप्रणिपत्याहप्रसादंकुरुमेगुरो ॥ कृतापराधानपिहिक्षमंतेगुरवःशिशून्॥३९॥

तत्साधुयदहंशप्तोभवतादानवेश्वर ॥ नबिभेमिपरेभ्योऽहंनचराज्यपरिक्षयात् ॥ ४० ॥ नैवदुःखंममविभोयदहंराज्यविच्युतः ॥
दुःखंकृतापराधत्वाद्भवतोमेमहत्तमम् ॥ ४१ ॥ क्षमस्वतत्तातकृतापराधंबालोस्मिनीचोस्मिसुदुर्मतिश्च ॥ कृतेपिदोषेगुरवःशिशूनांक्षाम्यं
तिदैन्यंसमुपागतानाम् ॥ ४२ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्तेवचनेमहात्माविमुक्तमोहोहरिपादभक्तः ॥ चिरंविचिंत्याद्भुतमेतदित्थमुवा
चपुत्रंमधुरंवचोऽथ ॥ ४३ ॥ प्रह्लादउवाच ॥ मोहेनमेऽधुनाज्ञानंविवेकश्चतिरस्कृतः ॥ येनसर्वगतंविष्णुंजानंस्त्वांशप्तवानहम् ॥ ४४ ॥
तन्नूनमविवेकोयंभवंतंयेनदानव ॥ ममापिसमहाबाहोविवेकप्रतिषेधकः ॥ ४५ ॥ तस्माद्राज्यंप्रतिविभोनज्वरंकर्त्तुमर्हसि ॥ अवश्यंभावि
नोह्यर्थानांविनश्यंतिकर्हिचित् ॥ ४६ ॥ पुत्रमित्रकलत्रार्थेराज्यभोगधनायच ॥ आगमेनिर्गमेप्राज्ञोनविषादंसमाचरेत् ॥ ४७ ॥ यथायथास
मायांतिपूर्वकर्मविधानतः ॥ सुखदुःखानिदैत्येंद्रनरस्तानिसहेत्तथा ॥ ४८ ॥ आपदामागमंदृष्ट्वानविषण्णोभवेद्वशी ॥ संपदंचसुविस्तीर्णां
प्राप्यनोधृतिमान्भवेत् ॥ ४९ ॥ धनक्षयेनमुह्यंतिनहृष्यंतिधनागमे ॥ धीराःकार्येषुचतदाभवंतिपुरुषोत्तमाः ॥ ५० ॥ एवंविदित्वादैत्येंद्र
नविषादंकथंचन ॥ कर्तुमर्हसिविद्वंस्त्वंपंडितोनावसीदति ॥ ५१ ॥ तथान्यच्चमहाबाहोहितंशृणुमहार्थकम् ॥ भवतोऽथतथान्येषांश्रुत्वात
च्चसमाचर ॥ ५२ ॥ शरण्यंशरणंगच्छतमेतंपुरुषोत्तमम् ॥ सतेत्राताभयादस्माद्दानवप्रभविष्यति ॥ ५३ ॥ येसंश्रयंतिहरिमीशमनादिम
ध्यंविष्णुंचराचरगुरुंहरिमीशितारम् ॥ संसारगर्तपतितस्यकरावलंबंनूनंनतेभुविनराज्वरिणोभवंति ॥ ५४ ॥ तन्मनादानवश्रेष्ठतद्भक्तश्च
भवाधुना ॥ सएषभवतःश्रेयोविधास्यतिजनार्दनः ॥ ५५ ॥ अहंचपापोपशमार्थमीशमाराधयामीहचतीर्थयात्राम् ॥ विमुक्तपापश्चतदाभ
विष्येवदाच्युतोलोकपतिर्नृसिंहः ॥ ५६ ॥ पुलस्त्यउवाच ॥ इत्येवमाश्वास्यबलिंमहात्मासंस्मृत्ययोगाधिपतिंचविष्णुम् ॥ आमंत्र्यसर्वा

न्दनुसैन्यपालाञ्जगामकर्तुंशुभतीर्थयात्राम् ॥ ६७ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेवलिशिक्षादानंनामसप्तसप्ततितमोऽध्यायः॥७७॥ नारदउवाच ॥ कानितीर्थानिविप्रेंद्रप्रह्लादोनुजगामह ॥ प्रह्लादतीर्थयात्रांमेसम्यगाख्यातुमर्हसि॥१॥पुलस्त्यउवाच ॥ शृणुत्वंकथयिष्यामि पापपंकप्रणाशिनीम् ॥ प्रह्लादतीर्थयात्रांतेसर्वपापप्रणाशिनीम् ॥ २ ॥ संत्यज्यमेरुंकनकाचलेंद्रतीर्थंजगामामरसंघजुष्टम् ॥ ख्यातंपृथिव्यांशुभदंहिमानसंयत्रस्थितोमत्स्यवपुःपुरेशः ॥ ३ ॥ तस्मिंस्तीर्थवरेस्नात्वासंतर्प्यपितृदेवताः ॥ संपूज्यचजगन्नाथमच्युतंश्रुतिभिर्युतम् ॥ ४ ॥ उपोष्यभूयःसंपूज्यदेवर्षिपितृमानवान् ॥ जगामकच्छपंद्रष्टुंकौशिक्यांपापनाशनम् ॥ ५ ॥ तस्यांस्नात्वामहानद्यांसंपूज्यचजगत्पतिम् ॥ समुपोष्यशुचिर्भूत्वादत्त्वाविप्रेषुदक्षिणाम् ॥६॥ नमस्कृत्यजगन्नाथमथकूर्मवपुर्धरम् ॥ ततोजगामकृष्णायांद्रष्टुंवाजिमुखंप्रभुम् ॥ तत्रदेवह्रदेस्नात्वातर्पयित्त्वापितॄन्सुरान् ॥ ७ ॥ संपूज्यहयशीर्षंचजगामगजसाह्वयम् ॥ तत्रदेवंजगन्नाथंगोविंदंचक्रपाणिनम् ॥ ॥ ८ ॥ स्नात्वासंपूज्यविधिवज्जगामयमुनांनदीम् ॥ तस्यांस्नातःशुचिर्भूत्वासंतर्प्यर्षिसुरान्पितॄन् ॥ ददर्शदेवदेवेशंलोकनाथंत्रिविक्रमम् ॥ ९ ॥ नारदउवाच ॥ सांप्रतंभगवान्विष्णुस्त्रैलोक्याक्रमणंवपुः ॥ करिष्यतिजगत्स्वामीवलिवंधनमीश्वरः ॥ १० ॥ तत्कथंपूर्वंकालेपिविभुरासीत्त्रिविक्रमः ॥ कस्यवावंधनंविष्णुःकृतवांस्तच्चमेवद ॥११॥ पुलस्त्यउवाच॥ श्रूयतांकथयिष्यामियोऽयंप्रोक्तस्त्रिविक्रमः॥ यस्मिन्कालेवभूवाथयंचवंचितवानसौ ॥१२॥ आसीद्धुंधुरितिख्यातःकश्यपस्यौरसःसुतः ॥ दनोर्गर्भसमुद्भूतोमहावलपराक्रमः ॥१३॥ ससमाराध्यचतदाब्रह्माणंतपसासुरः॥अवध्यत्वंसुरैःसेंद्रैःप्रार्थयन्सतुनारद॥१४॥तस्यतंचवरंप्रादात्तपसापंकजोद्भवः ॥परितुष्टःसचवलीनिर्जगामत्रिविष्टपम् ॥१५॥ चतुर्थस्यकलेरादौजित्वादेवान्सवासवान् ॥ धुंधुःशक्रत्वमकरोद्धिरण्यकशिपौसति ॥ १६॥ तस्मिन्कालेसवलवान्हि

रण्यकशिपुस्ततः ॥ चचारमंदरगिरौदैत्योधुंधुसमाश्रितः ॥ १७ ॥ ततोऽसुरायथाकामंविचरंतितिविष्टपे ॥ त्रिदशाब्रह्मलोकेचसंस्थिता दुःखसंयुताः ॥ १८ ॥ ततोऽमरान्ब्रह्मसदोनिवासिनःश्रुत्वाथधुंधुर्दितिजानुवाच ॥ व्रजामदैत्यावयमग्रजस्यसदोविजेतुंत्रिदशान्सशक्रान् ॥ १९ ॥ तेधुंधुवाक्यंतुनिशम्यदैत्याःप्रोचुर्ननोविद्यतिलोकपाल ॥ गतिर्ययायामपितामहाजिरंसुदुर्गमोयंपरतोहिमार्गः ॥ २० ॥ इतः सहस्रैर्बहुयोजनाख्यैर्लोकोमहर्नाममहर्षिजुष्टः ॥ येषांहिदृष्ट्यार्पणचोदितेनदंह्यंतिदैत्याःसहसेक्षितेन ॥ २१ ॥ ततोऽपरोयोजनकोटिरेको लोकोजनोनामवसंतियत्र ॥ गोमातरोस्मासुविनाशकारीयासांनकोपीहमहासुरेंद्रः ॥ २२ ॥ ततोऽपरोयोजनकोटिभिस्तुत्रिंशद्भिरादित्य सहस्रदीप्तः ॥ सत्याभिधानोभगवन्निवासोवरप्रदोभूद्भवतोहियोसौ ॥ २३ ॥ यस्यवेदध्वनिंश्रुत्वाविकसंतिसुरादयः ॥ संकोचमसुरायांति येचतेषांसधर्मिणः ॥ २४ ॥ तस्मान्मात्वंमहाबाहोमतिमेतांसमादध ॥ वैराज्यभुवनंधुंधोदुरारोहंसदानृभिः ॥ २५ ॥ तेषांवचनमाकर्ण्य धुंधुःप्रोवाचदानवान् ॥ गंतुकामःससदनंब्रह्मणोजेतुमीश्वरम् ॥ २६ ॥ कथंतुकर्मणाकेनगम्यतेदानवर्षभाः ॥ कथंतत्रसहस्राक्षः संप्राप्तःसहदैवतैः ॥ २७ ॥ तेधुंधुनादानवेंद्राःपृष्टाःप्रोचुर्वचोऽधिपम् ॥ नवयंविद्मतत्कर्मशुक्रस्तद्वेत्त्यसंशयम् ॥ २८ ॥ दैत्यानांतु वचःश्रुत्वाधुंधुर्दैत्यपुरोहितम् ॥ पप्रच्छशुक्रंकिंकर्मकृत्वाब्रह्मसदोगतिः ॥ २९ ॥ ततोऽस्मैकथयामासदैत्याचार्यःकलिप्रियः ॥ शक्रस्य चरितंश्रीमान्पुरावृत्ररिपोःकिल ॥ ३० ॥ सहस्राक्षःशतंचैकंयज्ञानामयजत्पुरा ॥ दैत्येंद्रवाजिमेधानांतेनब्रह्मसदोगतिः ॥ ३१ ॥ तद्वाक्यं दानवपतिःश्रुत्वाशुक्रस्यवीर्यवान् ॥ यष्टुंगोमेधयज्ञानांचकारमतिमुत्तमाम् ॥ अथामंत्र्यासुरगुरुंदानवांश्चाप्यनुत्तमान् ॥ ३२ ॥ प्रोवाच यक्ष्येहंयज्ञैरश्वमेधैःसुदक्षिणैः ॥ तदागच्छध्वमवनींगच्छामोवसुधाधिपान् ॥ ३३ ॥ विजित्यहयमेधान्वैयथाकामगुणान्वितान् ॥ आहूयंतां

चेश्वेतकेशव ॥ नमोनीलमहानीलअनिरुद्धनमोस्तुते ॥ १४ ॥ द्वादशात्मककालात्मन्सामात्मन्परमात्मक ॥ व्योमाकांत्मकसुब्रह्मन्सु
क्ष्मात्मकनमोस्तुते ॥ १५ ॥ हरिकेशमहाकेशगुडाकेशनमोस्तुते ॥ मुंजकेशहृषीकेशसर्वेनाथनमोस्तुते ॥ १६ ॥ सूक्ष्मस्थूलमहास्थूल
महासूक्ष्मभयंकर ॥ श्वेतपीतांबरधरनीलवासोनमोस्तुते ॥ १७ ॥ कुशेशयनमस्तेस्तुपद्मेशयजलेशय ॥ गोविंदप्रीतिकर्तश्चहंसपीता
म्बरप्रिय ॥ १८ ॥ अधोक्षजनमस्तेस्तुशार्ङ्गध्वजजनार्दन ॥ वामनायनमस्तुभ्यंनमस्तेमधुसूदन ॥ १९ ॥ सहस्रशीर्षायनमोब्रह्मशी
र्षायवैनमः ॥ नमःसहस्रनेत्रायसोमसूर्यानलेक्षण ॥ २० ॥ नमश्चाथर्वशिरसेमहाशीर्षायतेनमः ॥ नमस्तेधर्मनेत्रायमहानेत्रायते
नमः ॥ २१ ॥ नमःसहस्रपादायसहस्रभुजमन्यवे ॥ नमोयज्ञवराहायमहारूपायतेनमः ॥ २२ ॥ नमस्तेविश्वदेवायविश्वात्मन्वि
श्वसंभव ॥ विश्वरूपनमस्तेस्तुत्वत्तोविश्वमभूदिदम् ॥ २३ ॥ न्यग्रोधस्त्वंमहाशाखस्त्वंमूलकुसुमार्चितः ॥ स्कंधपत्रांकुरलतापल्लवाय
नमोस्तुते ॥ २४ ॥ मूलंतेब्राह्मणाःस्कंधाःक्षत्रियाभवतःप्रभो ॥ वैश्याःशाखास्त्वचःशूद्रातेनमोस्तुवनस्पते ॥ २५ ॥ ब्राह्मणाःसाग्नयोवक्त्रा
त्सायुधावाहुतोनृपाः ॥ पार्श्वाद्विशश्चोरुयुगाज्जाताःशूद्राश्चपादतः ॥२६ ॥ नेत्राद्भानुरभूत्त्वत्तःपद्भ्यांभूःश्रोत्रयोर्दिशः ॥ नाभ्याश्चाभूदंत
रिक्षंशशांकोमनसस्तव ॥ २७ ॥ प्राणाद्वायुःसमभवत्कामाद्ब्रह्मापितामहः ॥ क्रोधात्रिणयनोरुद्रःशीर्ष्णोद्यौःसमवर्तत ॥ २८ ॥ इंद्राग्नी
वदनाज्जातौपशवोमलसंभवाः ॥ ओषध्योरोमसंभूताविरजास्त्वंनमोस्तुते ॥ २९ ॥पुष्पहासनमस्तेस्तुमहाहासनमोस्तुते ॥ ॐकारस्त्वं
वषट्कारोवौषट्त्वंचसुधास्वधा ॥ ३० ॥ स्वाहाकारनमस्तुभ्यंहंतकारनमोस्तुते ॥ सर्वाकारनिराकारवेदाकारनमोस्तुते ॥ ३१ ॥ त्वंहि
वेदमयोदेवःसर्वदेवमयस्तथा ॥ सर्वतीर्थमयश्चैवसर्वयज्ञमयोरसः ॥ ३२ ॥ नमस्तेयज्ञपुरुषयज्ञभागभुजेनमः ॥ नमःसहस्रधारायशतधारा

यतेनमः ॥ ३३ ॥ भूर्भुवःस्वःस्वरूपायगोदायामृतदायिने ॥ सुवर्णब्रह्मदात्रेचसर्वधात्रेचतेनमः ॥ ३४ ॥ ब्रह्मेशायनमस्तुभ्यंब्रह्मणेब्रह्मरूप
धृक् ॥ परंब्रह्मनमस्तेस्तुशब्दब्रह्मनमोस्तुते ॥ ३५ ॥ विद्यात्वंवेद्यरूपस्त्वंवंदनीयस्त्वमेवच ॥ बुद्धिस्त्वमपिबोध्यश्चबोद्धात्वंचनमोस्तु
ते ॥ ३६ ॥ होताहोमश्चहव्यंचहूयमानश्चहव्यवाट् ॥ पातापोताचपूतश्चपावनीयश्चॐनमः ॥ ३७ ॥ हन्ताचहन्यमानश्चक्रियमाणस्त्वमे
वच ॥ हर्तानेताचनीतिश्चपूज्योग्र्योविश्वधार्यपि ॥ ३८ ॥ स्रुक्स्रुवौविश्वधामासिकपालोलूखलोरणिः ॥ यज्ञपात्रारणेयस्त्वमेकधाबहुधा
त्रिधा ॥ ३९ ॥ यज्ञस्त्वंयजमानस्त्वमीड्यस्त्वमसियाजकः ॥ ज्ञाताज्ञेयस्तथाज्ञानंध्याताध्येयोऽसिचेश्वर ॥ ४० ॥ ध्यानयोगश्चयोगी
चगतिर्मोक्षोधृतिःसुखम् ॥ योगांगानित्वमीशानःसर्वगस्त्वंनमोस्तुते ॥ ४१ ॥ ब्रह्माहोतातथोद्गातासोमयूपोथदक्षिणा ॥ दीक्षात्वंत्वंपुरोडा
शस्त्वंपशुःपशुहाह्यसि ॥४२॥ गुह्योधातापरमसिनरोनारायणस्तथा ॥ महाजनोनिरयणःसहस्रार्केन्दुरूपवान् ॥ ४३ ॥ द्वादशारोथषण्णा
भिस्त्रिव्यूहोद्विगुणस्तथा ॥ कालचक्रोमहामेधाःशंभुःशक्रःप्रभंजनः ॥४४॥ मित्रावरुणमूर्तिस्त्वममूर्तिरनघःशुभः ॥ प्राग्वंशकायोभूतादि
र्महाभूतोऽच्युतोद्विजः ॥ ४५ ॥ त्वमूर्ध्वकेतोर्ध्वधरऊर्ध्वरेतानमोस्तुते ॥ महापातकहात्वंचउपपातकहातथा ॥ ४६ ॥ मुनीशःसर्वपापघ्न
स्त्वामहंशरणंगतः ॥ इत्येतत्परमंस्तोत्रंसर्वपापप्रमोचनम् ॥ ४७ ॥ महेश्वरेणकथितंवाराणस्यांपुरामुने ॥ केशवस्याग्रतोगत्वास्नात्वा
तीर्थोदकेशुभे ॥ ४८ ॥ उपशांतस्तदाजातोरुद्रःपापोपशांतिदम् ॥ एतत्पवित्रंत्रिपुरघ्नभाषितंपठन्नरोविष्णुपुरेमहर्षे ॥ विमुक्तपापोप्युपशा
न्तमूर्तिःसंपूज्यतेदेववरैःससिद्धैः ॥ ४९ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावेपापप्रशमनस्तवोनामसप्ताशीतितमोऽध्यायः ॥ ८७ ॥ ॥
पुलस्त्यउवाच ॥ द्वितीयंपापशमनंस्तवंवक्ष्यामितेमुने ॥ येनसम्यगधीतेनपापनाशंतुगच्छति ॥ १ ॥ मत्स्यंनमस्येदेवेशंकूर्मंदेवेशमेवच॥

हयशीर्षंनमस्येहंभवंविष्णुंत्रिविक्रमम् ॥ २ ॥ नमस्येमाधवेशानौहृषीकेशकुमारिलौ ॥ नारायणंनमस्येहंनमस्तेगरुडासन ॥ ३ ॥ जये शंनरसिंहंचरूपधारंकुरुध्वजम् ॥ कामपालमखंडंचनमस्येब्राह्मणप्रियम् ॥ ४ ॥ अजितंविश्वकर्माणंपुंडरीकंद्विजप्रियम् ॥ हरिंशंभुंनम स्येचब्रह्माणंसप्रजापतिम् ॥ ५ ॥ नमस्येशूलबाहुंचदेवंचक्रधरंतथा ॥ शिवंविष्णुंसुवर्णाक्षंगोपतिंपीतवाससम् ॥ ६ ॥ नमस्येचगदापाणिं नमस्येचकुशेशयम् ॥ अर्धनारीश्वरंदेवंनमस्येपापनाशनम् ॥ ७ ॥ गोपालंचसवैकुंठंनमस्येचापधारिणम् ॥ नमस्येविष्णुरूपंचज्येष्ठेशंपंच मंतथा ॥ ८ ॥ उपशांतंनमस्येहंमार्कंडेयंसजंबुकम् ॥ नमस्येपद्मकिरणंनमस्येवडवामुखम् ॥ ९ ॥ कार्तिकेयंनमस्येहंबाह्लिकंशंखिनंतथा ॥ नमस्येपद्मकिरणंनमस्येचकुशेशयम् ॥ १० ॥ नमस्येस्थाणुमनघंनमस्येवनमालिनम् ॥ नमस्येलांगलीशंचनमस्येहंश्रियःपतिम् ॥ ११ ॥ नमस्येचत्रिणयनंनमस्येहव्यवाहनम् ॥ नमस्येचत्रिसौवर्णंनमस्येधरणीधरम् ॥ १२ ॥ त्रिणाचिकेतंब्रह्माणंनमस्येशशिभूषणम् ॥ कपर्दिनं नमस्येचसर्वामयविनाशनम् ॥ १३ ॥ नमस्येशशिनंसूर्यंध्रुवंरुद्रंमहौजसम ॥ पद्मनाभंहिरण्याक्षंनमस्येस्कंदमव्ययम् ॥ १४ ॥ नमस्येहंभी महंसौनमस्येहाटकेश्वरम् ॥ सदाहंसंनमस्येचनमस्येप्राणतर्पणम् ॥ १५ ॥ नमस्येरुक्मकवचंमहायोगिनमीश्वरम् ॥ नमस्येश्रीनिवासंचनमस्ये पुरुषोत्तमम् ॥ १६ ॥ नमस्येचचतुर्बाहुंनमस्येचसुधाधिपम् ॥ वनस्पतिंमधुपतिंनमस्येमनुमव्ययम् ॥ १७ ॥ श्रीकंठंवासुदेवंचनीलकंठं सदाशिवम् ॥ नमस्येशर्वमनघंगौरीशंलकुडेश्वरम् ॥ १८ ॥ मनोहरंचकृष्णेशंनमस्येचक्रपाणिनम् ॥ यशोधनंमहाबाहुंनमस्येचकुशप्रि यम् ॥ १९ ॥ भूधरंछादितगदंसुनेत्रंसुरशंसितम् ॥ भद्राक्षंवीरभद्रंचनमस्येशंकुकर्णिनम् ॥ २० ॥ वृषध्वजंमहेशंचविश्वमित्रंशशिप्रभम् ॥ उपेंद्रंचसगोविंदंनमस्येपंकजप्रियम् ॥ २१ ॥ सहस्रशिरसंदेवंनमस्येकुंदमालिनम् ॥ कालाग्निरुद्रदेवेशंनमस्येकृत्तिवाससम् ॥ २२ ॥

नमस्येछागलेशंचनमस्येपंकजासनम् ॥ सहस्राक्षंकोकनदंनमस्येहरिशंकरम् ॥२३॥ अगस्त्यंगरुडंविष्णुंकपिलंब्रह्मवाङ्मयम् ॥ सनात
नंचब्रह्माणंनमस्येब्रह्मतत्परम् ॥ २४ ॥ अप्रतर्क्यंचतुर्बाहुंसहस्रांशुंतपोमयम् ॥ नमस्येधर्मराजानंदेवंगरुडवाहनम् ॥ २५ ॥ सर्वभूतगतं
शांतंनिर्मलंसर्वलक्षणम् ॥ महायोगिनमव्यक्तंनमस्येपापनाशनम् ॥ २६ ॥ निरंजनंनिराकारंनिर्गुणंनिलयंपदम् ॥ नमस्येपापहर्तारंशर
ण्यंशरणंव्रजे ॥२७॥ एतत्पवित्रंपरमंपुराणंप्रोक्तंत्वगस्त्येनमहर्षिणाच ॥ धन्यंयशस्यंबहुपापनाशनंसंकीर्तनात्स्मरणात्स्पर्शनाच्च ॥ २८॥
इतिश्रीवामनपुराणेवामनप्रादुर्भावेप्रह्लादतीर्थयात्रायांद्वितीयःपापनाशनस्तवोनामाष्टाशीतितमोऽध्यायः ॥८८॥ पुलस्त्यउवाच ॥ गतेथ
तीर्थयात्रायांप्रह्लादेदानवेश्वरे ॥ कुरुक्षेत्रंसमभ्यागाद्द्रष्टुंवैरोचनोबलिः ॥ १ ॥ तस्मिन्महाधर्मयुतेतीर्थेब्राह्मणपुंगवः ॥ शुक्रोद्विजातिप्रवरा
नामंत्रयतभार्गवः ॥ २ ॥ भृगुणामंत्र्यमाणांवैश्रुत्वात्रेयाःसगौतमाः ॥ कौशिकांगिरसश्चैवतत्त्वज्ञाः कुरुजांगलान् ॥ ३ ॥ उत्तराशांप्रजग्मु
स्तेनदीमनुशतद्रवीम् ॥ शातद्रवेजलेस्नात्वाविप्रास्तेप्रययुस्ततः ॥४ ॥ विधायतत्रसुस्नानंसंपूज्यपितृदेवताः ॥ प्रजग्मुःकिरणांपुण्यांदिने
शकिरणच्युताम्॥५॥तस्यांस्नात्वाचदेवर्षे सर्वएवमहर्षयः ॥ ऐरावतींसुपुण्योदांस्नात्वाजग्मुरथेश्वरीम्॥६॥देविकायाजलेस्नात्वापयोष्ण्यांश्चै
वतापसाः ॥अवतीर्णास्मुनेस्नातुमात्रेयाद्यास्तुतांतदीम्॥७॥ततोनिमग्नाददृशुःप्रतिबिंबमथात्मनः॥अंतर्जलेद्विजश्रेष्ठमहदाश्चर्यकारकम्॥८॥
उन्मज्जन्तश्चददृशुःपुनर्विस्मितमानसाः॥ततःस्नात्वासमुत्तीर्णाऋषयःसर्वएवहि॥९॥जग्मुस्ततोपितेब्रह्मन्कथयंतःपरस्परम्॥चिंतयंतश्चसत
तंकिमेतादितिविस्मिताः ॥१०॥ ततोदूरादपश्यंस्तेवनषंडंसुविस्तृतम् ॥ घनंघनदलश्यामंखगश्रमाविनाशनम् ॥११॥ अतितुंगतयाव्यो
मआवृण्वानंनरोत्तम ॥ विस्तृताभिर्लताभिस्तुअंतर्भूमिंचनारद ॥ १२ ॥ काननंपुष्पितैर्वृक्षैःफलितैश्चततस्ततः ॥ दशार्धवाणसदृशैर्ने

भस्तारागणैरिव ॥ १३॥ तद्दृष्ट्वाकमलैर्व्याप्तंपुंडरीकैश्वशोभितम् ॥ तद्वत्कोकनदैर्व्याप्तंवनंपद्मवनंयथा ॥१४॥ प्रजग्मुस्तुष्टिमतुलां तेह्लादं परमंययुः॥विविशुःप्रीतमनसोहंसाइवमहासरः॥१५॥तन्मध्येददृशुःपुण्यमाश्रमंलोकपूजितम् ॥ चतुर्णांलोकपालानांवर्गोणांमुनिसत्तमाः ॥ ॥१६॥धर्माश्रमंप्राङ्मुखंतुपलाशविटपावृतम्॥प्रतीच्यभिमुखंब्रह्मन्नर्थपुण्यवनावृतम्॥१७॥ दक्षिणाभिमुखंकाम्यंरंभाशोकवनावृतम्॥उदङ्मुखंचमोक्षस्यशुद्धस्फटिकसन्निभम् ॥१८॥कृतां तेत्वाश्रमींमोक्षकामस्त्रेतायुगेस्थितः॥ आश्रम्यर्थोद्वापरंतेतिष्यां तेधर्मआश्रमी ॥१९॥ तमाश्रमंहिमुनयोदृष्ट्वात्रेयास्ततोव्ययाः॥तत्रैवहिरतिंचक्रुरखंडेसलिलाप्लुते॥२०॥धर्मोद्योभगवान्विष्णुरखंडइतिविश्रुतः ॥ चतुर्मूर्तिर्जगन्नाथः पूर्वमेवप्रतिष्ठितः ॥ २१ ॥ तमर्चयंतिऋषयोयोगात्मानोवहुश्रुताः ॥ शुश्रूषयाचतपसाब्रह्मचर्येणनारद ॥ २२ ॥ एवंतेन्यवसंस्तत्रसमेताभार्गवेणहि ॥ असुरेभ्यस्तदाभीतास्त्वाश्रिताःखंडपर्वताः ॥२३॥ तथान्येब्राह्मणाब्रह्मन्नश्मकुट्टामरीचिपाः॥स्नात्वाजलेहिकालिंद्याः प्रजग्मुर्दक्षिणामुखाः ॥ २४ ॥ अवंतीविषयंप्राप्यविष्णुमासाद्यसंस्थिताः ॥ विष्णोरपिप्रसादेनदुष्प्रवेशंमहासुरैः ॥ २५ ॥ वालखिल्यादयोजग्मुरवशादानवाद्भयात् ॥ रुद्रकोटिंसमाश्रित्यस्थितास्तेब्रह्मचारिणः ॥२६ ॥ एवंगतेषुविप्रेषुगौतमांगिरसादिषु ॥ शुक्रस्तुभार्गवान्सर्वान्नित्यंयज्ञविधौमुने ॥ २७ ॥ अधिष्ठितोभार्गवेणमहायज्ञेऽमितद्युतेः ॥ यज्ञदीक्षांवलेःशुक्रश्चकारविधिनास्वयम् ॥ २८ ॥ श्वेतांवरधरो दैत्यःश्वेतमाल्यानुलेपनः ॥ मृगाजिनास्तृतपृष्ठोवर्हपत्रविचित्रकः ॥ २९ ॥ समास्तेविततेयज्ञेसदस्यैरभिसंवृतः ॥ हयग्रीवक्षुराद्यैस्तुमयबाणपुरोगमैः ॥ ३० ॥ पत्नीविंध्यावलीतस्यदीक्षितायज्ञकर्माणि ॥ ललनानांसहस्रस्यप्रधानमृषिकन्यका ॥ ३१ ॥ शुक्रेणाश्वःश्वेतवर्णोमधुमासेसुलक्षणः ॥ महींचरितुमुत्सृष्टस्तारकाक्षस्त्वगाच्चतम् ॥ ३२ ॥ एवमश्वेसमुत्सृष्टेविततेयज्ञकर्माणि ॥ गतेचमासत्रितयेह्रियमाणे

चपावके ॥ ३३ ॥ पूज्यमानेषुदैत्येषुमिथुनस्थेदिवाकरे ॥ सुषुवेदेवजननीमाधवंवामनाकृतिम् ॥ ३४ ॥ संजातमात्रंभगवंतमीशंनारायणं लोकपतिंपुराणम् ॥ ब्रह्मासमभ्येत्यससमंमहर्षिभिस्तोत्रंजगादाथसमंमहर्षे ॥ ३५ ॥ नमोस्तुतेमाधवसत्त्वमूर्तेनमोस्तुतेसात्वतविश्वरूप ॥ नमोस्तुतेशत्रुवनेंधनाग्नेनमोस्तुतेपापमहादवाग्ने ॥ ३६ ॥ नमोस्तुपुंडरीकाक्षनमस्तेविश्वभावन ॥ नमस्तेजगदाधारनमस्तेपुरुषोत्तम ॥ ॥ ३७ ॥ नारायणजगन्मूर्तेजगन्नाथगदाधर ॥ पीतवासःश्रियःकांतजनार्दननमोस्तुते ॥ ३८ ॥ भवांस्त्राताचगोप्ताचविश्वात्मासर्वगोऽव्ययः ॥ सर्वधारिन्धराधारिन्त्रपधारिन्नमोस्तुते ॥ ३९ ॥ वर्द्धिष्णोवर्द्धिताशेषत्रैलोक्यसुरपूजित ॥ कुरुष्वत्वंदेवपतेमघोनोऽश्रुप्रमार्जनम् ॥ ४० ॥ त्वंधाताचविधाताचसंहर्तात्वंमहेश्वर ॥ महालयोमहायोगीयोगशायीनमोस्तुते ॥ ४१ ॥ इत्थंस्तुतोजगन्नाथःसर्वात्मासर्वगोहरिः ॥ प्रोवाचभगवान्मह्यंकुरूपनयनंविभो ॥ ४२ ॥ ततश्चकारदेवस्यजातकर्मादिकाःक्रियाः ॥ भारद्वाजोमहातेजाबार्हस्पत्यस्तपोधनः ॥ ॥ ४३ ॥ व्रतबंधंतथेशस्यकृतवान्सर्वशास्त्रवित् ॥ ततोददुःप्रीतियुतासर्वएवयथाक्रमम् ॥ ४४ ॥ यज्ञोपवीतंपुलहःपुलस्त्यःसितवाससी ॥ मृगाजिनंकुंभयोनिर्भरद्वाजस्तुमेखलाम् ॥ ४५ ॥ पालाशमददाद्दंडंमरीचिर्ब्रह्मणःसुतः ॥ अक्षसूत्रंवारुणिस्तुकौशचीरमथांगिराः ॥ ४६ ॥ छत्रंददौध्रुराजश्चउपानद्युगलंभृगुः ॥ कमंडलुंबृहत्तेजाःप्रादाद्विष्णोर्बृहस्पतिः ॥ ४७ ॥ एवंकृतोपनयनोभगवान्भूतभावनः ॥ संस्तूयमानऋषिभिर्वेदान्सांगानधीतवान् ॥ ४८ ॥ भारद्वाजात्सांगिरसात्सामवेदंमहास्वरम् ॥ महदाख्यानसंयुक्तंगांधर्वसहितंमुने ॥ ४९ ॥ मासेनैकेनभगवाञ्ज्ञातश्रुतिमहार्णवः ॥ लोकाचारप्रवृत्त्यर्थमभूत्सतुविशारदः ॥ ५० ॥ सर्वशास्त्रेषुनैपुण्यंगत्वादेवोक्षयोऽव्ययः ॥ प्रोवाचब्राह्मणश्रेष्ठंभारद्वाजमिदंवचः ॥ ५१ ॥ श्रीवामनउवाच ॥ ब्रह्मन्व्रजामिदेह्याज्ञांकुरुक्षेत्रंमहोदयम् ॥ तत्रदैत्यपतेःपुण्यो

हयमेधःप्रवर्तते ॥ ९२ ॥ समाविष्टानिपश्यत्वंतेजांसिपृथिवीतले ॥ येसंविधानाःसततंमदंशाःपुण्यवर्धनाः ॥ तेनाहंप्रतिजाना मिकुरुक्षेत्रंगतोबलिः ॥ ९३ ॥ भरद्वाजउवाच ॥ स्वेच्छयातिष्ठगच्छामोनाहमाज्ञापयामिते ॥ गमिष्यामोवयंविष्णोवलेरध्वरमा श्रितः ॥ ९४ ॥ यद्भवंतमहंदेवपरिपृच्छामितद्वद ॥ केषुकेषुविभोनित्यंस्थानेषुपुरुषोत्तम ॥ सान्निध्यंभवतोब्रूहिज्ञातुमिच्छामितत्त्वतः ॥ ॥ ९५ ॥ विष्णुरुवाच ॥ श्रूयतांकथयिष्यामियेषुयेषुगुरोत्वहम् ॥ निवसामिसुपुण्येषुस्थानेषुवहुरूपवान् ॥ ९६ ॥ ममावतारैर्वसुधा नभस्तलंपातालमंभोनिधयोदिवंच ॥ दिशःसमस्तागिरयोंवुदाश्चव्याप्ताभरद्वाजममानुरूपैः ॥ ९७ ॥ येदिव्यायेचभौमाजलगगनचराः स्थावरायेचब्रह्मन्सेंद्राःसार्काःसचंद्रायमवसुवरुणाह्यग्नयःसर्वपालाः॥ब्रह्माद्याःस्थावरांताद्विजखगसहितामूर्तिमंतोह्यमूर्तेस्तेसर्वेमत्प्रसूतावहु विविधगुणाःपूरणार्थंपृथिव्याम् ॥ ९८ ॥ एतेहिपुण्याःसुरसिद्धदानवैःपूज्यानराःसन्निहितामहीतले ॥ यैर्दृष्टमात्रैःसहसैवनाशंप्रयातिपापं द्विजवर्यकीर्तितैः ॥९९॥ इतिश्रीवामनपुराणेप्रह्लादतीर्थयात्रायांवामनप्रादुर्भावेवामनजन्मनामनवाशीतितमोऽध्यायः ॥ ८९ ॥ ॥ श्रीभग वानुवाच ॥ आद्यंहिमत्स्यरूपंमेसंस्थितंमानसेह्रदे ॥ सर्वपापक्षयकरंकीर्तनस्पर्शनादिभिः ॥ १ ॥ कौर्ममन्यत्सन्निधानेकौशिक्याःपाप नाशनम् ॥ हयशीर्षंचकृष्णायांगोविंदंहस्तिनापुरे ॥ २ ॥ त्रिविक्रमंचकालिंद्यांलिंगभेदेभवंविभुम् ॥ केदारेमाधवेशौचकुब्जाम्रेकृष्णमूर्द्ध जम् ॥ ३ ॥ नारायणंवदर्यांचवाराहेगरुडध्वजम् ॥ जयेशंभद्रकर्णेचविपाशायांद्विजप्रियम् ॥ ४ ॥ रूपधारमिरावत्यांकुरुक्षेत्रेकुरुध्वजम् ॥ कृतशौचेनृसिंहंचगोकर्णेविश्वधारणम् ॥ ५ ॥ प्राचीनेकामपालंचपुंडरीकंमहांभसि ॥ विशाखयूपेह्यजितंहंसंहंसपदेतथा ॥ ६ ॥ पयोष्ण्यां यमखंडंचवितस्तायांकुमारिलम् ॥ मणिमत्याह्रदेशंभुंब्रह्मण्येचप्रजापतिम् ॥ ७ ॥ मधुनद्यांचक्रधरंशूलवाहुंहिमाचले ॥ विद्धिविष्णुंमुनि

श्रेष्ठस्थितमौषधसानुनि ॥ ८ ॥ भृगुतुंगेसुवर्णाख्यंनैमिषेपीतवाससम् ॥ गयायांगोपतिंदेवंगदापाणिंतमश्विरम् ॥ ९ ॥ त्रैलोक्यनाथंवरदं गोप्रचारंकुशेशयम् ॥ अर्द्धनारीश्वरंचक्रेमहीध्रंदक्षिणेगिरौ ॥ १० ॥ गोपालमुत्तरेनित्यंमहेंद्रेसोमपीथिनम् ॥ वैकुंठमपिसह्याद्रौपारियात्रे पराजितम् ॥ ११ ॥ कशेरुदेशेदेवेशंविश्वरूपंतपोधनम् ॥ मलयाद्रौचसौगंधिंविंध्यपादेसदाशिवम् ॥ १२ ॥ अवंतिविषयेधिष्ण्यंनिषधे ष्वमरेश्वरम् ॥ पांचालिकंचब्रह्मर्षेपांचालेषुसदास्थितम् ॥ १३ ॥ महोदयेहयग्रीवंप्रयागेयोगशायिनम् ॥ स्वयंभुवंमधुवनेह्यब्जगंधंचपुष्करे ॥ १४ ॥ तथैवविप्रप्रवरंवाराणस्यांचकेशवम् ॥ अविमुक्तंचतत्रैवगीयतेसुरकिन्नरैः ॥ १५ ॥ पंपायांपद्मकिरणंसमुद्रेवडवामुखम् ॥ कुमार धारेवाह्लीशंकार्तिकेयंचवर्हणे ॥ १६ ॥ ओजसेशंभुमनघंस्थाणुंचकुरुजांगले ॥ वनमालिनमाहुर्मांकिष्किंधावासिनोजनाः ॥ १७ ॥ वीरं कुवलयारूढंशंखचक्रगदाधरम् ॥ श्रीवत्सांकमुदारांगंनर्मदायांश्रियःपतिम् ॥ १८ ॥ माहिष्मत्यांत्रिणयनंतत्रैवचहुताशनम् ॥ अर्बुदेच त्रिसौपर्णंक्ष्माधरंसूकराचले ॥ १९ ॥ त्रिणाचिकेतंब्रह्मर्षेप्रभासेचकपर्दिनम् ॥ तत्रैवात्रापिचख्यातंतृतीयंशशिशेखरम् ॥ २० ॥ उदये शशिनंसूर्यंध्रुवंचत्रितयस्थितम् ॥ हेमकूटेहिरण्याक्षंस्कंदंशरवणेमुने ॥ २१ ॥ महालयेस्मृतंरुद्रमुत्तरेषुकुरुष्वथ ॥ पद्मनाभंमुनिश्रेष्ठसर्वं सौख्यप्रदायकम् ॥ २२ ॥ सप्तगोदावरेब्रह्मन्विख्यातंहाटकेश्वरम् ॥ तत्रैवचमहाहंसंप्रयागेऽपिमहेश्वरम् ॥ २३ ॥ शोणेचरुक्मकवचंकुंडि नेघ्राणतर्पणम् ॥ भिल्लीवनेमहायोगंमंत्रेषुपुरुषोत्तमम् ॥ २४ ॥ प्लक्षावतरणेविश्वंश्रीनिवासंद्विजोत्तमम् ॥ सूर्यारकेचतुर्वाहुंमगधायांसुधा पतिम् ॥ २५ ॥ गिरिव्रजेपशुपतिंश्रीकंठंयमुनातटे ॥ वनस्पतिंसमाख्यातंदंडकारण्यवासिनम् ॥ २६ ॥ कालंजरेनीलकंठंसरय्वामनु त्तमम् ॥ हंसयुक्तंमहाकोश्यांसर्वपापप्रणाशनम् ॥ २७ ॥ गोकर्णेदक्षिणेशर्वंवासुदेवंप्रजामुखे ॥ विंध्यशृंगेमहागौरंकंथायांमधुसूदनम् ॥

॥ २८ ॥ त्रिकूटशिखरेब्रह्मंश्चक्रपाणिनमीश्वरम् ॥ लोहदंडेहृषीकेशंकौशलायांमहोदयम् ॥ २९ ॥ महावासंसुराष्ट्रेचनवराष्ट्रेयशोधरम् ॥ भूधरंदेविकानद्यांविदेहायांकुशप्रियम् ॥ ३० ॥ गोमत्यांछादितगदंशंखोद्धारेचशंखिनम् ॥ सुनेत्रं सैंधवारण्येशूरंशूरपुरेस्थितम् ॥ ३१ ॥ रुद्राख्यंचहिरण्वत्यांवीरभद्रंत्रिविष्टपे ॥ शंकुकर्णेचनीलाभंभीमंशालवनेविदुः ॥ ३२ ॥ विश्वामित्रंचघटितेकैलासेवृषभध्वजम् ॥ महेशंम हिलाशैलेकामरूपंशशिप्रभम् ॥३३॥ वलभ्यामपिगोमित्रंकटाहंब्राह्मणप्रियम् ॥ उपेंद्रंसिंहलद्वीपेशक्राह्वेकुंदमालिनम् ॥ ३४ ॥ रसातलेच विख्यातंसहस्रशिरसंमुने ॥ कालाग्निंकपिलंचैवतथान्यंकृत्तिवाससम् ॥ ३५ ॥ सुतलेकूर्ममचलंवितलेपंकजाननम् ॥ महातलेगुरुंख्यातंदेवे शंवृषलेश्वरम् ॥३६॥ तलेसहस्रचरणंसहस्रभुजमीश्वरम् ॥ सहस्राख्यंपरिख्यातंमुसलाकृष्टदानवम् ॥३७॥ पातालेयोगिनामीशंसंस्थितंहरिशं करम् ॥ धरातलेकोकनदं मेदिन्यांचक्रपाणिनम् ॥३८॥ भुवर्लोकेचगरुडंस्वर्लोके विष्णुमव्ययम् ॥ महर्लोकेतथागस्त्यंकपिलंचजनेस्थित म् ॥ ३९ ॥ तपोलोकेखिलंब्रह्मन्वाङ्मयंसप्तसंयुतम् ॥ ब्रह्माणंब्रह्मलोकेचसममेवप्रतिष्ठितम् ॥४० ॥ सनातनंतथाशैवेपरंब्रह्मचवैष्णवे ॥ अप्रतर्क्यंनिरालंबेनिराकारेतपोमयम् ॥४१॥ जंबूद्वीपेचतुर्बाहुंकुशद्वीपेकुशेशयम् ॥ प्लक्षद्वीपेमुनिश्रेष्ठख्यातंगरुडवाहनम् ॥४२॥ पद्मनाभं तथाक्रौंचेशाल्मलेवृषभध्वजम् ॥ सहस्राक्षःस्थितःशाकेवामनःपुष्करेस्थितः ॥ ४३ ॥ तथापृथिव्यांब्रह्मर्षेशालिग्रामेस्थितोप्यहम् ॥ सजल स्थलपर्यंतमशेषस्थावरेषुच ॥४४॥ एतानिपुण्यानिमहालयानिब्रह्मन्पुराणानिसनातनानि ॥ ब्रह्मप्रदानीहमहौजसानिसंकीर्तनीयान्यघनाश नानि ॥४५॥ संकीर्तनान्नाशमुपैतिपापंसंदर्शनादेवचदेवतायाः ॥ धर्मार्थकामावपवर्गमेवदेवालभंतेमनुजाःससाध्याः ॥ ४६ ॥ एतानितुभ्यंवि निवेदितानिमहालयानीहमयानिजानि ॥ उत्तिष्ठगच्छामिमहासुरस्ययज्ञंसुराणांहिहितायविप्र ॥४७॥ पुलस्त्यउवाच ॥ इत्येवमुक्त्वावचनं

महर्षेविष्णुर्भरद्वाजमृषिंमहात्मा ॥ विलासलीलागमनोगिरींद्रात्सचाभ्यगच्छत्कुरुजांगलंहि ॥ ४८ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावे स्वस्थानकथनंनामनवतितमोऽध्यायः ॥ ९० ॥ ॥ पुलस्त्यउवाच ॥ ततःसमागच्छतिवासुदेवेमहीचकंपेगिरयश्चचेलुः ॥ क्षुब्धाः समुद्रादिविसर्वलोकोवभौविपर्यस्तगतिर्महर्षे ॥ १ ॥ यज्ञःसमागात्परमाकुलत्वंनवेद्मिकिंमांमधुहाकरिष्यति ॥ यथाप्रदग्धोस्मिमहेश्वरेण किंमांनसंवक्ष्यतिवासुदेवः ॥ २ ॥ ऋक्सामंत्राहुतिभिर्हुतास्तुतेप्यासुरीयाज्वलनास्तुभागात् ॥ भक्ष्याद्द्विजेंद्रैरपिसंप्रदत्तान्नैवप्रतीच्छंति विभोभयेन ॥ ३ ॥ तंदृष्ट्वाघोररूपंतुनिमित्तंदानवेश्वरः ॥ पप्रच्छौशनसंशुक्रंप्रणिपत्यकृतांजलिः ॥ ४ ॥ किमर्थमाचार्यमहीसशैलारंभे ववाताभिहताचचाल ॥ किमासुरीयाश्चहुतानपीहभागान्नगृह्णंतिहुताशनाश्च ॥ ५ ॥ क्षुब्धाकिमर्थंमकरालयाविभोऋक्षाणिखेनैवचरंतिपूर्व वत् ॥ दिशःकिमर्थंतमसापरिप्लुतादोषेणकस्याद्यवदस्वमेगुरो ॥ ६ ॥ पुलस्त्यउवाच ॥ शुक्रस्तद्वाक्यमाकर्ण्यविरोचनसुतेरितम् ॥अथो ज्ञात्वाकारणंचततोवचनमब्रवीत् ॥७॥ शुक्रउवाच ॥ शृण्वद्यदैत्येश्वरयेनभागान्नामीप्रयच्छंतिमहासुरेभ्यः ॥ हुताशनामंत्रहुतास्त्वमीभिर्नू नंसमागच्छतिवासुदेवः॥८॥तदंघ्रिविक्षेपमपारयंतीमहीसशैलाचलितादिशश्च ॥ तस्यांवलंगांमकरालयाश्चतूद्वृत्तवेलादितिजाद्यजाताः॥९॥ ॥ पुलस्त्यउवाच ॥ शुक्रस्यवचनंश्रुत्वाबलिर्भार्गवमब्रवीत् ॥ धर्मसत्यंचपथ्यंचसत्त्वोत्साहसमन्वितम् ॥१०॥ बलिरुवाच ॥आयातेवासु देवेवदममभगवन्धर्मकामार्थयुक्तंकिंकार्यंकिंचदेयंमणिकनकमथोराज्यमुर्वींधनंवा॥किंवावाच्यंमुरारेर्निजहितमथवातद्धितंवाप्रयुंजेतथ्यंपथ्यं प्रियंभोवदममशुभदंतत्करिष्येनचान्यत्॥११॥पुलस्त्यउवाच॥तद्वाक्यंभार्गवःश्रुत्वादैत्यनाथेरितंमहत्॥विचिंत्यनारदःप्राहभूतभव्यार्थमी श्वरः॥१२॥ शुक्रउवाच ॥ त्वयाकृतायज्ञभुजोसुरेंद्रावहिष्कृतायेश्रुतिदृष्टमार्गाः ॥ श्रुतिःप्रमाणंमखभागभाजिनःसुरास्तदर्थंहरिरभ्युपैति॥

॥१३॥ तस्याध्वरंदैत्यसमागतस्यकार्यंशृणुत्वंपरिपृच्छसेयत्॥कार्यंनदेयंहिविभोतृणाग्रंयदध्वरंभूकनकादिकंवा ॥१४॥ वाच्यंतथासामनि
रर्थकंविभोकस्त्वांवरंदातुमलंहिशक्नुयात् ॥ यस्योदरेभूर्भुवनाकपालरसातलेशानिवसंतिनित्यशः ॥१५॥ बलिरुवाच ॥ मयातवोक्तंवचनं
हिभार्गवनचार्थिनेकिंचनदातुमुत्सहे ॥ समागतेप्यर्थिनिहीनवृत्तेतद्बद्धिदेवेकथमागतेहि ॥ १६ ॥ जनार्दनेलोकपतौमहर्षेसमागतेनास्तिकथं
नुवच्मि॥एवंचश्रूयतेलोकेसतांकथयतांविभो ॥१७॥ सद्भावोब्राह्मणेष्वेवकर्तव्योभूतिमिच्छता॥ दृश्यतेऽपितथातच्चसत्यंब्राह्मणपुंगव॥१८॥
पूर्वाभ्यासेनकर्माणिसंभवंतिनृणांस्फुटम्॥वाक्कायमानसानीहयोन्यंतरगतान्यपि॥१९॥किंवात्वयाद्विजश्रेष्ठपौराणीनश्रुताकथा॥यावृत्तामल
येपूर्वंकोशकारसुतस्यच॥२०॥शुक्रउवाच॥कथयस्वमहाबाहोकोशकारसुताश्रयाम्॥कथांपौराणिकींब्रह्मन्महाकौतूहलंहिमे॥२१॥ ॥बलि
रुवाच ॥शृणुष्वकथयिष्यामिकथामेतांमखांतरे॥पूर्वाभ्यासेनविद्वान्हिसत्यंभृगुकुलोद्वह ॥२२॥मुद्गलस्यमुनेःपुत्रोज्ञानविज्ञानपारगः॥कोश
कारइतिख्यातआसीद्ब्रह्मंस्तपोधनः ॥ २३॥ तस्यासीद्दयितासाध्वीधर्मिष्ठानामतःश्रुता ॥ सतीवात्स्यायनसुताधर्मशीलापतिव्रता ॥२४॥
तस्यामस्यसुतोजातःप्रकृत्यावैजडाकृतिः॥नासौब्रूतेमूर्खवच्चनासौपश्यतिचांधवत्॥२५॥ तंजातंब्राह्मणीपुत्रंजडंमूकंविचक्षुषम्॥ साचमाता
गृहद्वारिषष्ठेह्नितमवासृजत् ॥ २६ ॥ ततोगाचदुराचाराराक्षसीजातहारिणी ॥ स्वंशिशुंकृशमादायशूर्पाक्षीनामनामतः ॥ २७ ॥ तत्रोत्सृ
ज्यस्वपुत्रंसाजग्राहद्विजनंदनम् ॥ तमादायजगामाथभोक्तुंशालोदरेगुरौ ॥ २८ ॥ ततस्तामागतांवीक्ष्यतस्याभर्ताघटोदरः ॥ नेत्रहीनः
प्रत्युवाचकिमानीतंत्वयाप्रिये ॥ २९ ॥ साब्रवीद्राक्षसपतेमयास्थाप्याशिशुंनिजम् ॥ कोशकारद्विजगृहेतस्यानीतःप्रभोसुतः ॥ ३० ॥
सप्राहनत्वयाभद्रेभद्रमाचरितंत्विदम् ॥ महाज्ञानीद्विजेंद्रोसौसनःशप्स्यतिकोपितः ॥ ३१ ॥ तस्माच्छीघ्रमिमंत्यक्त्वातन्नूनंघोररूपिणम् ॥

अन्यस्यकस्यचित्पुत्रंक्षिप्रमानयसुंदरि ॥ ३२ ॥ इत्येवमुक्तासारौद्रीराक्षसीकामरूपिणी ॥ समाजगामत्वरितासमुत्पत्यविहायसा ॥
॥ ३३ ॥ सचापिराक्षससुतोनिसृष्टोगृहवाह्यतः ॥ रुरोदसत्वरंत्रह्मन्प्रक्षिप्यांगुष्ठमानने ॥ ३४ ॥ साशब्दंतंचिराच्छ्रुत्वाधर्मिष्ठापतिमब्र
वीत् ॥ पश्यस्वयंमुनिश्रेष्ठसुशब्दस्तनयस्तव ॥ ३५ ॥ त्रस्तासानिर्जगामाथगृहमध्यात्तपस्विनी ॥ सचापिब्राह्मणश्रेष्ठःसमपश्यच्चतंशि
शुम् ॥ ३६ ॥ वर्णरूपादिसंयुक्तंतद्वत्स्वतनयंयथा ॥ ततोविहस्यप्रोवाचक्रोशकारोनिजांप्रियाम् ॥ ३७॥ एवमाविश्यधर्मिष्ठेभाव्यंभूतेन
सांप्रतम् ॥ कोऽप्यस्माकंछलयितुंस्वरूपीभुविसंस्थितः ॥ ३८ ॥ इत्युक्त्वावचनंपत्नींमंत्रैस्तंराक्षसात्मजम् ॥ ववंधोल्लिख्यवसुधांसकु
शेनाथपाणिना ॥ ३९ ॥ एतस्मिन्नंतरेप्राप्ताशूर्पाक्षीविप्रवालकम् ॥ अंतर्द्धानंगताभूमौगृहेचिक्षेपदूरतः ॥ ४० ॥ सक्षिप्तमात्रंजग्राहक्रो
शाकारस्तुपुत्रकम् ॥ साचाभ्येत्यगृहीतुंस्वंनाशकद्राक्षसीसुतम् ॥ ४१ ॥ इतश्चेतश्चविभ्रष्टासाभर्तारमुपागता ॥ कथयामासयद्वृत्तंस्वकी
यात्मजहरिणम् ॥ ४२ ॥ एवंगतायांराक्षस्यांब्राह्मणेनमहात्मना ॥ सराक्षसशिशुर्ब्रह्मन्भार्यायैविनिवेदितः ॥ ४३ ॥ कपिलायाःसवत्सा
याःपित्रात्मतन[illegible]स्तदा ॥ दध्नासंतोषितोत्यर्थंक्षीरेणेक्षुरसेनच ॥ ४४ ॥ द्वावेववर्द्धितौवालौसंजातौसप्तवार्षिकौ ॥ पित्राचकृतनामानौनि
शाकरदिवाकरौ ॥ ४५ ॥ नैशाकरिर्दि[illegible]कीर्तिर्निशाकीर्तिःस्वपुत्रकः ॥ तयोश्चकारविप्रोसौव्रतवंधक्रियांक्रमात् ॥ ४६ ॥ व्रतवंधेकृते
वेदंपपाठसौदिवाकरः ॥ निशाकरोजडतयानपपाठेतिनःश्रुतम् ॥ ४७ ॥ तंबांधवाःस्वपितरौमाताभ्रातागुरुस्तथा ॥ पर्यनिंदंस्तथा
न्येचजनामलयवासिनः ॥ ४८ ॥ ततःसपित्राक्रुद्धेनक्षिप्तःकूपेतुनिर्जले ॥ महाशिलांतदुपरिपितातस्याथव्याक्षिपत् ॥ ४९ ॥ एवंक्षिप्तस्त
दाकूपेवहुवर्षगणान्स्थितः ॥ तत्रास्त्यामलकीगुल्मःपोपायफलितोभवत् ॥ ५० ॥ ततोदशसुवर्षेषुसमतीतेषुभार्गव ॥ तस्यमाता

गमत्कूपंतमपश्यच्छिलान्वितम् ॥ ५१ ॥ साहष्ट्वानिचितंकूपेशिलयागिरिकल्पया ॥ उच्चैःप्रोवाचकेनेयंकूपोपरिशिलाकृता ॥ ५२ ॥
कूपांतस्थःसुतोवाणींश्रुत्वामातुर्निशाकरः ॥ प्राहाम्बदत्तातातेनकूपोपरिशिलात्वियम् ॥ ५३ ॥ सातिभीताब्रवीत्कोसिकूपांतस्थोऽद्भुत
स्वरः ॥ सोप्याहतवपुत्रोस्मिनिशाकरइतिश्रुतः ॥ ५४ ॥ साब्रवीत्तनयोमेस्तिनाम्नाख्यातोदिवाकरः ॥ निशाकरेतिनाम्नाचनकश्चित्तनयो
स्तिमे ॥५५॥ सचतत्पूर्वचरितंमातुर्निरवशेषतः ॥ कथयामासपुत्रोसौयद्वृत्तंपूर्वमेवहि ॥५६॥ साश्रुत्वातांशिलांसुभ्रूःसमुत्क्षिप्यान्यतोऽक्षि
पत् ॥ सतुकूपात्समुत्तीर्यमातुःपादौववंदच ॥५७॥ सास्वानुरूपंतनयंहष्ट्वास्वजनमग्रतः ॥ ततस्तमादायसुतंधार्मिष्ठापतिमेत्यच ॥५८॥
कथयामासतत्सर्वंचेष्टितंस्वसुतस्यच ॥ ततोह्यपृच्छद्विप्रोऽसौकिमिदंपातकारणम् ॥ ५९ ॥ प्रोक्तवान्यदभून्त्पूर्वमहत्कौतूहलंमम ॥
तच्छ्रुत्वावचनंधीमान्कोशकारंद्विजोत्तमम् ॥ प्राहपुत्रोऽद्भुतंवाक्यंमातरंपितरंतथा ॥ ६० ॥ निशाकरउवाच ॥ श्रूयतांकारणंतातयेनमू
कत्वमाश्रितम् ॥ मयाजडत्वमनघतथांधत्वंस्वचक्षुषा ॥ ६१ ॥ पूर्वमासमहंविप्रकुलेवृंदारकस्यतु ॥ वृषाकपेश्चतनयोमालागर्भसमुद्भवः॥
॥ ६२ ॥ ततःपितापाठयन्मांशास्त्रंधर्मार्थकामदम् ॥ मोक्षमार्गपरंतातसेतिहासंश्रुतिंतथा॥ ६३ ॥ सोऽहंतातमहाज्ञानीपरपारविशारदः॥
जातोमदांधस्तेनाहंदुष्कर्माभिरतोऽभवम् ॥ ६४ ॥ मदात्समभवल्लोभस्तेननष्टाप्रगल्भता ॥ विवेकोनाशमगमन्मदोमेमोहमागतः ॥६५॥
मूढभावतयाचाथजातःपापरतोऽस्म्यहम् ॥ परदारपरार्थेषुसदामेमानसंस्थितम् ॥ ६६ ॥ परदाराभिमर्शित्वात्परार्थहरणादपि ॥ भृतो
ह्युद्बंधनेनाहंनरकंरौरवंगतः ॥ ६७॥ तस्माद्वर्षसहस्रांतेभुक्तशिष्टेतदागसि ॥ अरण्येमृगहापापःसंजातोऽहंमृगाधिपः ॥ ६८ ॥ व्याघ्रत्वेसं
स्थितस्तावद्बद्धःपंजरगःकृतः ॥ नराधिपेनविभुनानीतश्चनगरंद्विज ॥ ६९ ॥ बद्धस्यपंजरस्थस्यव्याघ्रत्वेपिस्थितस्यच ॥ धर्मार्थकाम

शास्त्राणिप्रत्यभासंतसर्वशः ॥ ७० ॥ ततोनृपतिशार्दूलोगदापाणिःकदाचन ॥ एकवस्त्रपरीधानोनगरान्निर्ययौबहिः ॥ ७१ ॥ तस्यभार्या जितानामरूपेणाप्रतिमाभुवि ॥ सानिर्गतेभर्तरिरंतुममांतिकमुपागता ॥ ७२ ॥ तांदृष्ट्वाववृधेचित्तेपूर्वाभ्यासान्मनोभवः ॥ यथैवकामशास्त्रेषु ततोऽहमवदंचताम् ॥ ७३ ॥ राजपुत्रिसुकल्याणिनवयौवनशालिनि ॥ चित्तंहरसिमेभीरुकोकिलाध्वनिनायथा ॥ ७४ ॥ सातद्वचनमा कर्ण्यप्रोवाचतनुमध्यमा ॥ कथमेवावयोर्व्यग्ररतियोगउपैष्यति ॥ ७५ ॥ ततोहमब्रवंतातराजपुत्रींसुमध्यमाम् ॥ द्वारमुद्घाटयाद्यत्वंनि र्गमिष्यामिसत्वरम् ॥ ७६ ॥ साप्यब्रवीद्दिवाव्याग्रलोकोऽयंपरिपश्यति ॥ रात्रावुद्घाटयिष्यामिततोरंस्यावचेच्छया ॥ ७७ ॥ तामेवाहम वोचंवैकालक्षेपोनमेक्षमः ॥ तस्मादुद्घाटयद्वारंमांवन्धाचविमोचय ॥ ७८ ॥ ततःसापिवरश्रोणीद्वारमुद्घाटयच्छनैः ॥ उद्घाटितेततोद्वारे निर्गतोऽहंबहिःक्षणात् ॥ ७९ ॥ निगडादिकपाशाश्चच्छिन्नावलवतामया॥ सातदानृपतेर्भार्यागृहीतारंतुमिच्छता ॥ ८० ॥ ततोदृष्टोऽस्मि नृपतेर्भृत्यैरतुलविक्रमैः ॥ शस्त्रहस्तैःसर्वतश्चतैरहंपरिवेष्टितः ॥ ८१ ॥ महापाशैःशृंखलाभिःसमाहृत्यचमुद्गरैः ॥ बद्धस्तानब्रवंमैवंमां हंतुंयूयमर्हत ॥ ८२ ॥ तेचमद्वचनंश्रुत्वामामेवंरजनीचरम् ॥ वटवृक्षेदृढंबद्धाघातयन्वैतपोधन ॥ ८३ ॥ भूयस्ततश्चनरकंपरदारनिषे वणात् ॥ गतोवर्षसहस्रांतेजातोहंश्वेतगर्दभः ॥ ८४ ॥ ब्राह्मणस्याग्निवेश्यस्यगृहेबहुकलत्रिणः ॥ तत्रापिसर्वविज्ञानंप्रत्यभासतमेतदा ॥ ॥ ८५ ॥ उपवाह्यःकृतश्चास्मिद्विजयोपिद्भिरादरात् ॥ एकदानवराष्ट्रीयाभार्यातस्याग्रजन्मनः ॥ ८६ ॥ विश्रुतिर्नामतःख्यातागंतुमैच्छद्गृ हेपितुः ॥ तामुवाचपतिर्गच्छआरुह्यैनंचगर्दभम् ॥ ८७ ॥ मासेनागमनंकार्यंनस्थेयंपरतस्ततः ॥ इत्येवमुक्तासाभर्त्रातन्वीचारुह्यगर्दभम् ॥ ॥ ८८ ॥ बंधनादवमुच्याथजगामत्वरितामुने ॥ ततोर्द्धपथिसातन्वीमत्पृष्ठादवरुह्यवै ॥ ८९ ॥ अवतीर्णानदींस्नातुंसुरूपामार्द्रवाससम् ॥

सर्वैरंगैरूपवतींदृष्ट्वातामहमाद्रवम् ॥ ९० ॥ मयाचाभिद्रुतातूर्णंपतितापृथिवीतले ॥ तस्याउपरिभोतातपतितोऽहंतदातुरः ॥ ९१ ॥
दृष्टोऽभवंतदातस्यानृणातदनुसारिणा ॥ तदोद्यम्यसयष्टिंमांसमधावत्त्वरान्वितः ॥ ९२ ॥ तद्भयात्तांपरित्यज्यप्रद्रुतोदक्षिणामुखः ॥ ततो
ऽभिद्रवतस्तूर्णंखलीनरशनामुने ॥ ९३ ॥ समासन्नातदाब्रह्मन्ममासौप्राणनाशने ॥ तत्रासक्तस्यपङ्कात्रादभून्मेजीवितक्षयः ॥ ९४ ॥ ततो
ऽस्मिनरकंभूयस्तस्मान्मुक्तोऽभवंशुकः ॥ महारण्येततोवद्धःशवरेणदुरात्मना ॥ ९५ ॥ पंजरेन्यस्यविक्रीतोवणिक्पुत्रायशालिने ॥
तेनाप्यंतःपुरतरेयुवतीनांसमीपतः ॥ ९६ ॥ सर्वशास्त्रविदित्येवदोषघ्नश्चेत्यवस्थितः ॥ तत्रासतस्तरुण्यस्ताओदनादिफलादिभिः ॥
॥ ९७ ॥ पक्वैश्चदाडिमफलैःपोषयन्त्योदिनेदिने ॥ एकदापद्मपत्राक्षीश्यामापीनपयोधरा ॥ ९८ ॥ सुश्रोणीतनुमध्याचवणिक्पुत्रीप्रिया
शुभा ॥ नाम्नाचंद्रावलीनामससुगृह्याथपंजरम् ॥ ९९ ॥ मांजग्राहसुचार्वंगीकराभ्यांचारुहासिनी ॥ चकारोपरिपीनाभ्यांस्तनाभ्यांसा
तदाचमाम् ॥ १०० ॥ ततोहंकृतवान्भावंतस्यांविलसितुंप्लवन् ॥ ततोनुप्लवमानोहंहारेमर्कटवंधने ॥ १ ॥ तत्राहंपापसंयुक्तोमृतश्चतद
नंतरम् ॥ भूयोपिनरकंघोरंप्रपन्नोस्मिसुदुर्मतिः ॥ २ ॥ तस्मान्मृतोवृषत्वंचगतश्चांडालफक्कणे ॥ सचैकदामांशकटेनियोज्यस्वांविलासि
नीम् ॥ ३ ॥ समारोप्यमहातेजागंतुंकृतमतिर्वनम् ॥ तत्राग्रतःसचांडालोगतःसाचास्यपृष्ठतः ॥ ४ ॥ गायंतीयातितच्छ्रुत्वाजातोऽहंव्य
थितेंद्रियः ॥ पृष्ठतस्तुसमालोक्यविपर्यस्तस्तथाप्लुतः ॥ ५ ॥ पतितोभूमिमगमंक्षणेनक्षणविभ्रमात् ॥ योक्त्रेणवद्धएवास्मिपंचत्वमगमं
ततः ॥ ६ ॥ भूयोनिमग्नोनरकेदशवर्षशतान्यहम् ॥ जातस्तवगृहेतातसोऽहंजातिमनुस्मरन् ॥ तावंत्येवाद्यजन्मानिस्मरामिचानुपूर्वशः ॥
॥ ७ ॥ पूर्वाभ्यासाच्चशास्त्राणांवचनंचागतंमम ॥ तदहंज्ञातविज्ञानोनाचरिष्येकथंचन ॥ ८ ॥ पापानिघोररूपाणिमनसाकर्मणागिरा ॥

शुभंवाप्यशुभंवापिस्वाध्यायःशास्त्रजीविका ॥ ९ ॥ बंधनंवावधोवापिपूर्वाभ्यासेनजायते ॥ जातिंयदापौर्विकींतुस्मरतेतातमानवः ॥ तदास
तेभ्यःपापेभ्योनिवृत्तिंहिकरिष्यति ॥ १० ॥ तस्मात्त्रमिष्येशुभवर्धनायपापक्षयायाथसुनेहरण्यम् ॥ भवान्दिवाकीर्तिमिमंसुपुत्रंगृहस्थधर्मे
विनियोजयस्व ॥ ११ ॥ बलिरुवाच ॥ इत्येवमुक्तःसनिशाकरस्तदाप्रणम्यमातापितरौमहर्षे ॥ जगामपुण्यंसदनंमुरारेःख्यातंवदर्या
श्रममाद्यमैशम् ॥ १२ ॥ एवंपुराभ्यासरतस्यपुंसोभवंतिदानाध्ययनादिकानि ॥ तस्माच्चपूर्वद्विजवर्यवैमयात्वभ्यस्तमासीन्नतुतेत्र
वीमि ॥ १३ ॥ दानंतपोवाध्ययनंमहर्षेस्तेयंमहापातकमग्निदाहः ॥ ज्ञानानिचैवाभ्यसनाच्चपूर्वंभवंतिधर्मार्थयशांसिनान्यथा ॥ १४ ॥
इत्येवमुक्तोबलवान्सशुक्रंदैत्येश्वरःस्वंगुरुमीशितारम् ॥ ध्यायंस्तदातंमधुकैटभारिंनारायणंचक्रगदासिपाणिम् ॥ १५ ॥ इतिश्रीवाम
नपुराणेशुक्रबलिसंवादोनामैकनवतितमोऽध्यायः ॥ ९१ ॥ पुलस्त्यउवाच ॥ एतस्मिन्नंतरेप्राप्तेभगवान्वामनाकृतिः ॥ यज्ञवाटसमी
पेसउच्चैर्वचनमब्रवीत् ॥ १ ॥ ॐकारपूर्वाःश्रुतयोमखेऽस्मिन्स्तिष्ठंतिरूपेणतपोधनानाम् ॥ यज्ञोऽश्वमेधःप्रवरःक्रतूनांयुक्तंयथास्यात्कुरुदै
त्यनाथ ॥ २ ॥ इत्थंवचनमाकर्ण्यदानवाधिपतिर्वशी ॥ सार्घ्यपात्रःसमभ्यागाद्यत्रदेवःस्थितोऽभवत् ॥ ३ ॥ ततःसदेवदेवेशंपूजयित्वा
विधानतः ॥ प्रोवाचभगवन्ब्रूहिकिंददामितवमानद ॥ ४ ॥ ततोब्रवीन्मधुरिपुर्दैत्यराजंतमव्ययः ॥ विहस्यसुचिरंकालंभरद्वाजमवेक्ष्यच ॥
॥ ५ ॥ गुरोर्मदीयस्यगुरुस्तस्यास्त्यग्निपरिग्रहः ॥ नसधारयतेभूम्यांपारक्यायांचपावकम् ॥ ६ ॥ तदर्थमभियाचेयंममदानवपार्थिव ॥
मच्छरीरप्रमाणेनदेहिराजन्क्रमत्रयम् ॥ ७ ॥ मुरारिवचनंश्रुत्वाबलिर्भार्यामवेक्ष्यच ॥ बाणंचतनयंवीक्ष्यइदंवचनमब्रवीत् ॥ ८ ॥ नकेव
लंप्रमाणेनवामनोऽयंलघुप्रियः ॥ येनक्रमत्रयंचोक्तंयातेतेमद्विधेपिच ॥ ९ ॥ प्रायोविधाताल्पधियांनराणांबहिःकृतानांखलुदिव्यपुण्यैः ॥

धनादिकंभूरिनवैददातियथैवविष्णुर्नबहुप्रयासः ॥१०॥ नददातिविधिस्तस्ययस्यभाग्यविपर्ययः ॥ मयिदातरियश्चायंयाचतेचक्रमत्रयम् ॥ ॥ ११ ॥ इत्येवमुक्त्वावचनंमहात्माभूयोऽप्युवाचाथहरिंसुरारिः ॥ यावच्चविष्णोगजवाजिभूमिंदासीर्हिरण्यंयदपीप्सितंच ॥ १२ ॥ भवां श्चयाचिताविष्णोत्वहंदाताजगत्पतिः ॥ दातुंवैममलज्जेयंकथंनस्यात्पदत्रये ॥ १३ ॥ रसातलंस्वांपृथिवींभुवंनाकमथापिवा ॥ एतेभ्यःक तमंदद्यांस्वस्थोयाचस्ववामन ॥ १४ ॥ वामनउवाच ॥ गजाश्वभूहिरण्यादितदर्थिभ्यःप्रदीयताम् ॥ एतावदेवसंप्रार्थीदेहिराजन्पदत्रयम् ॥ ॥ १५ ॥ इत्येवमुक्तेवचनेवामनेनमहात्मना ॥ बलिर्भृंगारमादायददौविष्णोःक्रमत्रयम् ॥ १६ ॥ पाणौतुपतितेतोयेदिव्यंरूपंचकारह ॥ त्रैलोक्यक्रमणार्थायवज्ररूपंजगन्मयम् ॥ १७ ॥ पादेभूमिस्तथाजंघेनभस्त्रैलोक्यवंदितम् ॥ सत्यंतपोजानुयुग्मेऊरूस्तोमेरुमंदरौ ॥ ॥ १८ ॥ विश्वेदेवाःकटीभागेमरुतोबस्तिशीर्षयोः ॥ लिंगस्थितोमन्मथश्चवृषणस्थःप्रजापतिः ॥ १९ ॥ कुक्षिस्थाअर्णवाःसप्तजठरेभुव नान्यथो ॥ वलिषुत्रिषुनद्यश्चयज्ञोंतर्जठरेस्थितः ॥ २० ॥ इष्टापूर्तादयःसर्वाःक्रियामंत्राश्चसंस्थिताः ॥ पृष्ठस्थावसवोदेवाःस्कंधोरुद्रैरधि ष्ठितः ॥ २१ ॥ बाहवश्चदिशःसर्वावसवोष्टौकराःस्मृताः ॥ हृदयेसंस्थितोब्रह्माकुलिशोहृदयास्थिषु ॥ २२ ॥ श्रीसहस्रमुरोमध्येचंद्रमा मनसिस्थितः ॥ ग्रीवाऽदितिर्देवमाताविद्यास्तद्वलयेस्थिताः ॥ २३ ॥ मुखेतुसाग्नयोविप्राःसंस्कारादशनच्छदाः ॥ धर्मकामार्थमोक्षाश्च शास्त्रैश्चैवसमन्विताः ॥ २४ ॥ लक्ष्म्यासहललाटस्थौश्रवणस्थौहिचाश्विनौ ॥ श्वासस्थोमातरिश्वाचमरुतःसर्वसंधिषु ॥ २५ ॥ सर्वसूक्तानिदशनाजिह्वादेवीसरस्वती ॥ चंद्रादित्यौचनयनेपक्ष्मस्थाःकृत्तिकादयः ॥ २६ ॥ विशाखादेवदेवस्यभ्रुवोर्मध्येव्यवस्थिताः ॥ तारकारोमकूपेभ्योरोमाणिचमहर्षयः ॥ २७ ॥ गुणैःसर्वमयोभूत्वाभगवान्भूतभावनः ॥ क्रमेणैकेनजगतींजहारसचराचराम् ॥ २८ ॥

ऊर्ध्वंविक्रममाणस्यमहारूपस्यतस्यवै ॥ दक्षिणोऽभूत्ततश्चेंदुःसूर्योभूत्सव्यतस्तथा ॥ २९ ॥ तृतीयक्रमणेनाथस्वर्महर्जनतापसाः ॥
क्रांतास्त्वर्द्धेनवैराजन्नर्द्धेनापूर्यतांम्बरम् ॥ ३० ॥ ततःप्रवर्धितोब्रह्मन्विष्णुर्वैदक्षिणांतरे ॥ ब्रह्मांडोदरमाहत्यनिरालोकंजगामसः ॥ ३१ ॥
विश्वांघ्रिणाप्रसरताकटाहेभेदितेऽम्बरात् ॥ कुटिलाविष्णुपादात्तुससाराकुलितातततः ॥ ३२ ॥ तस्माद्विष्णुपदीत्येवंतांस्तुवंति
चतापसाः ॥ भगवानप्यसंपूर्णेतृतीयेनुक्रमेविभुः ॥ ३३ ॥ समभ्येत्यबलिंप्राहईषत्प्रस्फुरिताधरः ॥ ऋणेभवसिदैत्येंद्रबंधनंघोरदर्शनम् ॥
त्वंपूरयपदंतन्मेनोचेद्बंधंप्रतीच्छमे ॥ ३४ ॥ तन्मुरारिवचःश्रुत्वाविहस्याथबलेःसुतः ॥ बाणःप्राहामरपतिंवचनंहेतुसंयुतम् ॥ ३५ ॥ बाणा
सुरउवाच ॥ कृत्वामहीमल्पतरांजगत्पतेस्वयंविधाताभुवनेश्वराणाम् ॥ कथंबलिंप्रार्थयसेसुविस्तृतांयांप्राग्भवान्नोविपुलांचकार ॥ ३६ ॥
विभोमहीयावतीचत्वयाविसृष्टासमेताभुवनांतराले ॥ दत्ताचताितेनहितावतीयंकिम्वाक्छलेनैषनिबध्यतेऽद्य ॥ ३७ ॥ ययैवशक्त्याभवता
हिपूर्वंतयैवशक्त्यादितिजेश्वरोसौ ॥ शक्तस्तुसम्पूजयितुंमुरारेप्रसीदमाबंधनमादिशस्व ॥ ३८ ॥ प्रोक्तंश्रुतौभवतापीशवाक्यंदानंपात्रेजाय
तेसौख्यदायि ॥ देशेपुण्येतद्वदेवापिकालेतच्चाशेषंदृश्यतेचक्रपाणौ ॥ ३९ ॥ दानंभूमिःसर्वकामप्रदाताभवान्पात्रंदेवदेवोऽजितात्मा ॥ का
लोज्येष्ठामूलयोगेमृगांकःकुरुक्षेत्रंपुण्यदेशःप्रसिद्धः ॥ ४० ॥ किंवादैवर्मद्विधैर्बुद्धिहीनैःशिक्षांनेयःसाधुवासाधुचैव ॥ स्वयंश्रुतीनामपिचा
दिकर्ताव्यवस्थितःसदसद्योजगद्वै ॥ ४१ ॥ कृत्वाप्रमाणंस्वयमेवहीनंपदत्रयंयाचितवांस्तुयच्च ॥ किंत्वंहिगृह्णासिविभोमहात्मारूपेणलोक
प्रतिवंदितेन ॥ ४२ ॥ नात्राश्चर्यंयज्जगद्वैसमग्रंक्रमत्रयेणैवपूर्णंतवाद्य ॥ क्रमेणभोलंघयितुंसमर्थोमहींसमग्रांननुलोकनाथ ॥ ४३ ॥ प्रमाण
हीनांस्वयमेवकृत्वावसुंधरांमाधवपद्मनाभ ॥ विष्णोनिबध्नासिकथंबलिंत्वंविभुर्यदेवेच्छसितत्कुरुष्व ॥ ४४ ॥ पुलस्त्यउवाच ॥ इत्येवमुक्ते

वचनेबलिनाबलिसूनुना॥प्रोवाचभगवान्वाक्यंब्रह्मादिकर्ताजनार्दनः ॥ ४५ ॥ त्रिविक्रमउवाच॥यान्युक्तानिवचांसीत्थंत्वयाबालेयसांप्रतम् ॥
तेषां वैहेतुसंयुक्तंशृणुप्रत्युत्तरंमम ॥ ४६ ॥ पूर्वमुक्तस्तवपितामयाराजन्पदत्रयम् ॥ देहिमह्यंप्रमाणेनतदेतत्समनुष्ठितम् ॥ ४७ ॥ किंनवे
त्तिप्रमाणंमेबलिस्तवपितासुरः ॥ प्रायच्छद्येननिःशंकंममानंपदत्रयम् ॥ ४८ ॥ सत्यंक्रमेणचैकेनक्रमेयंभूर्भुवादिकम् ॥ बलेरपिहिता
र्थायकृतमेतत्क्रमद्वयम् ॥ ४९ ॥ तस्माद्यन्ममबालेयत्वत्पित्राम्बुकरेमहत् ॥ दत्तंतेनायुरेतस्यकल्पंयावद्भविष्यति ॥ ५० ॥ इदमुक्त्वाब
लिसुतंबाणंदेवस्त्रिविक्रमः ॥ प्रोवाचबलिमभ्येत्यवचनंमधुराक्षरम् ॥ ५१ ॥ श्रीभगवानुवाच ॥ आपूरणाद्दक्षिणायागच्छराजन्महाफलम्॥
सुतलंनामपातालंवसतत्रनिरामयः ॥ ५२ ॥ बलिरुवाच ॥ सुतलेवसतोनाथममभोगाःकुतोऽव्ययाः ॥ भविष्यंतितुयेनाहंवसिष्या
मिनिरामयः ॥ ५३ ॥ त्रिविक्रमउवाच ॥ सुतलस्थस्यदैत्येंद्रयानिभोग्यानितेऽधुना ॥ भविष्यंतिमहार्हाणितानिवक्ष्यामिसर्वशः ॥
॥ ५४ ॥ दानान्यविधिदत्तानिश्राद्धान्यश्रोत्रियाणिच ॥ तथाधीतान्यव्रतिभिर्दास्यंतिभवतःफलम् ॥ ५५ ॥ तथान्यमुत्सवं
पुण्यंवृत्तेशक्रमहोत्सवे ॥ दीपप्रदाननामासौतवभावीमहोत्सवः ॥ ५६ ॥ तत्रत्वांनरशार्दूलाहृष्टाःपुष्टाःस्वलंकृताः ॥ पुष्पदीपप्रदानेनअ
र्चयिष्यंतियत्नतः ॥ ५७ ॥ तत्रोत्सवोमुख्यतमोभविष्यतिसचापिलोकेतवनामचिह्नितः ॥ यथैवराज्येभवतस्तुसांप्रतंतथैवसाभाव्यथकौ
मुदीति ॥ ५८ ॥इत्येवमुक्त्वामधुहादितीश्वरंविसर्जयित्वाससुतंसभार्यम्॥ उर्वींसमादायजगामतूर्णंसशक्रब्रह्मामरसंघजुष्टः ॥ ५९ ॥ दत्त्वा
मघोनेमधुजित्त्रिविष्टपंकृत्वाचदेवान्मखभागभोगिनः ॥ अंतर्दधेविश्वपतिर्महेशःसपश्यतामेवसुराधिपानाम् ॥ ६० ॥ स्वर्गंगतेधातरिवासुदे
वेशाल्वोऽसुराणांमहताबलेन ॥ कृत्वापुरंसौभमितिप्रसिद्धंतदांतरिक्षेविचचारकामात् ॥ ६१ ॥ मयश्चकामात्त्रिपुरंमहात्मासुवर्णताम्रायस

सुग्रसौख्यम् ॥ सतारकाख्यःसहवैद्युतेनसंतिष्ठतेमित्रकलत्रवांश्च ॥ ६२ ॥ बाणोऽपिदेवेऽथगतेत्रिविष्टपंबद्धेबलौचापिरसातलस्थे ॥ कृत्वा सुगुप्तंभुविशोणिताख्यंपुरंसचास्तेसहदानवेंद्रैः ॥ ६३ ॥ एवंपुराचक्रधरेणविष्णुनाबद्धोबलिर्वामनरूपधारिणा ॥ शक्रप्रियार्थंसुरकार्यसिद्ध्येहितायविप्रर्षभगोद्विजानाम् ॥ ६४ ॥ प्रादुर्भवस्तेकथितोमहर्षेपुण्यःशुचिर्वामनस्याघहारी ॥ श्रुतेयस्मिन्कीर्तितेसंस्मृतेचपापंप्यातिप्रक्षयंपुण्यमेति ॥ ६५ ॥ एतत्प्रोक्तंवामनीयंचरित्रंबद्धोबलिःपुण्यकीर्तिर्यथासौ ॥ यच्चैवान्यच्छ्रोतुकामोऽसिविप्रतत्तेवक्ष्येब्रूहिविश्रब्धमन्नशेषम् ॥ ६६ ॥ इतिश्रीवामनपुराणेबलिबंधनंनामद्विनवतितमोऽध्यायः ॥ ९२ ॥ नारदउवाच ॥ श्रुतंयथाभगवताबलिर्बद्धोमहात्मना ॥ किमन्यत्त्विहप्रष्टव्यंतच्छ्रुत्वाकथयामिते ॥ १ ॥ भगवान्देवराजायविष्णुर्दत्त्वात्रिविष्टपम् ॥ अंतर्धायगतःक्वासौसर्वात्माता कथ्यताम् ॥ ॥ २ ॥ परिचर्यार्थविधिनाब्रह्मापूजादिनाहरिम् ॥ पप्रच्छकिंचिरेणाथभवतागमनंकृतम् ॥ ३ ॥ अथोवाचजगत्स्वामीमयाकार्यंमहत्कृतम् ॥ सुराणांरिपुभोगार्थंस्वयंभोबलिबंधनम् ॥ ४ ॥ पितामहस्तद्वचनंश्रुत्वामुदितमानसः ॥ कथंकथमितिप्राहत्वंमांद्रष्टुमिहार्हसि ॥ ५ ॥ इत्येवमुक्तेभगवान्वचनेगरुडध्वजः ॥ दर्शयामासतद्रूपंसर्वदेवमयंलघु ॥ ६ ॥ तंदृष्ट्वापुंडरीकाक्षंयोजनायतविस्तृतम् ॥ तावानेवोर्ध्वमानेननततोयंप्रणतोभवत् ॥ ७ ॥ सम्यक्सुचरितंसाधुसाधुसाध्वित्युदीर्यच ॥ भक्तिगतोमहादेवेपद्मजःस्तोत्रमैरयत् ॥ ८ ॥ ॐनमस्ते देवाधिदेव वासुदेव एकशृंग बहुरूप वृषाकपे भूतभावन सुरासुरवृष सुरासुरमथन सुरपतिवास सुरनिर्माण अविघ्न कपिल महाकपिल विष्वक्सेन नारायण ध्रुवध्वज भालध्वज वैकुंठ पुरुषोत्तम वरेण्य विष्णो अपराजित जयजयंतविजयकृतावर्त महादेव अनादे अनंत अनाद्यंतमध्यनिधन पुरंजय धनंजय सुरस्तुत पृथुश्रवः पृश्निगर्भ हिरण्यगर्भ कमलगर्भ कमलायताक्ष कमलालयप्रिय वृष्णिमूल भूताधिवास

वर्गाध्यक्ष गदाधर श्रीधर वनमालाधर लक्ष्मीधर धरणीधर पद्मनाभ विरिंचे आर्ष्णिषेण महासेन सेनाध्यक्ष परिष्टुत वहुकल्प महाकल्पकल्पनामुख अनिरुद्ध सर्वग सर्वात्मक द्वादशात्मक शर्वात्मक सोमात्मक कलात्मक भूतात्मक रमात्मक सनातन मुंजकेश हरिकेश हृषीकेश गुडाकेश केतुमन् नील सूक्ष्म स्थूल पीत रक्तश्वेत श्वेताधिवास रक्तांबरप्रिय प्रीतिकर प्रीतिवास हंससीरध्वज नील वासः सर्वलोकाधिवास कुशेशय अधोक्षज गोविंद जनार्दन मधुसूदन वामन नमस्तेऽस्तु ॥ ॐसहस्रशीर्षाअसि सहस्रदृगसि सहस्रपादोऽसि अधोमुखोसि महापुरुषोसि सहस्रवाहुरसि सहस्रमूर्तिरसि त्वां वेदाः प्राहुः सहस्रवदनं नमस्ते नमस्ते ॥ ॐनमस्ते विश्वदेवेश विश्वभृत वि श्वात्मक विश्वरूप विश्वसंभव त्वत्तो विश्वमिदमभवद् ब्राह्मणस्ते मुखमासीत् क्षत्रियो दोः समभूदूरुयुग्माद्विशोऽभवन् शूद्राश्चरणकमले भ्यः॥ नाभेस्तथांतरिक्षंच इंद्राग्नीवक्रपंकजात्॥ मनसस्तुशशीजातः प्रसादात्तवचाप्यहम्॥क्रोधाज्जातस्तुत्र्यंबकः प्राणाज्जातोमातरिश्वाशि रसोद्यौरजायत श्रोत्रादिशोभवन् स्वयंभो॥ भूरियंचरणाज्जातागोत्रोद्भवातिशोभिता॥ त्वंनभस्त्वंचनक्षत्रंस्वेदोद्भिज्जास्तथांडजाः॥ मूर्ताश्चै वाप्यमूर्ताश्चसर्वेत्वत्तः समुद्भवाः॥ अतोविश्वात्मनाद्योसि ॐनमस्ते पुष्पहासोसि परमोसि महाहासोसि ॐकारोसि वषट्कारोसि स्वाहा कारोसि मातरिश्वासि यज्ञचरोसि त्रिकोशिरसि होतासि होमोसि हूयमानोसि पातासि पठितासि हंतासि हन्यमानोसि नीतिरसि मेधासि अग्निरसि विश्वधामासि अर्चोसि परमधामासि स्रुग्भांडोसि अरणिरसि अरणीयोसि ज्ञानमयोसि ध्यानमसि ध्येयोसि यज्ञोसि इष्टोसि यष्टासि दानमसि पशुरसि पूज्योसि इज्योसि होतासि गीतोसि उद्गातासि यजमानोसि गतिमानसि ज्ञानिनां ज्ञानमसि योगिनां योगोऽसि मोक्षगामिनांमोक्षोसि श्रीमतां श्रीरसि गृह्योसि धातासि परमसि सोमोसि सूर्योसि दक्षिणासि दीक्षितोसि नरोसि त्रिनयनोसि आदित्य

प्रभोसि शुचिरसि शुक्रोसि नभोसि नभस्योसि यज्ञोसि सहोसि सहस्योसि तपोसि तपस्योसि मधुरसि माधवोसि कालोसि संक्रमोसि
विक्रमोसि पराक्रमोसि अश्वग्रीवोसि महामेधोसि शंकरोसि हरीश्वरोसि सत्त्वमसि ब्रह्मचार्यसि स्वरसि मित्रावरुणोसि प्राग्वंशप्रकाशोसि
भूतादिरसि महाभूतोसि ऊर्ध्वकर्मांतकर्तासि व्याप्तोसि सर्वपापविमोचनोसि त्रिविक्रमोसि नमस्ते ॥ पुलस्त्य उवाच ॥ इत्थंस्तुतोसौप्रपि
तामहेनविष्णुःसदैवाद्भुतकर्मचारी ॥ प्रोवाचचेदंप्रपितामहंतुवरंवृणीष्वामलसत्त्ववृत्त ॥९॥ तमब्रवीत्प्रीतियुतःपितामहोवरंममेहाद्यविभोप्र
यच्छ॥रूपेणपुण्येनविभोरनेनसंस्थीयतांमद्भवनेमुरारे॥१०॥इत्थंवृतेतेनवरेवरेण्येदेवोऽप्यथार्चिततिमव्ययात्मा॥ तस्थौस्वरूपेणहिवामनेन
संपूज्यमानःसदनेस्वयंभोः॥११॥ नृत्यंतितत्राप्सरसांसमूहागायंतिगीतानिसुरेंद्रनार्यः॥विद्याधरास्तूर्यमवादयंतस्तुवंतिदेवासुरसिद्धसंघाः॥
॥१२॥ततःसमाराध्यविभुंमुरारिंपितामहोधौतमलःसुशुद्धः ॥ स्वर्गंविरंचेःसदनात्सुपुण्यादानीयपूजांप्रचकारविष्णोः ॥१३॥ स्वर्गंसहस्रंस
तुयोजनानांविष्णुःप्रमाणेनहिवामनोऽभूत् ॥ तत्रास्यशक्रःप्रचकारपूजांस्वयंभुवस्तुल्यगुणांमहर्षे ॥ १४ ॥ एतत्तवोक्तंभगवांस्त्रि
विक्रमश्चकारयद्देवहितंमहात्मा ॥ रसातलस्थांदितिजांहिकुर्वन्निवेदितंतेऽद्यमयाहिविप्र ॥ १५ ॥ इतिश्रीवामनपुराणेवामनप्रादुर्भावे
ब्रह्मोक्तस्तवोनामत्रिनवतितमोऽध्यायः ॥ ९३ ॥ ॥ पुलस्त्यउवाच ॥ गत्वारसातलंदैत्योमहामणिविचित्रितम् ॥ शुद्धस्फ
टिकसोपानंकारयामासवैपुरम् ॥ १ ॥ तत्रमध्येसुविस्तीर्णंप्रासादोवहुवेदिकः ॥ मुक्ताजालांतरद्वारोनिर्मितोविश्वकर्मणा ॥२॥ तत्रास्तेवि
विधान्भोगान्भुञ्जन्दिव्यान्समानुपान्॥ नाम्नाविंध्यावलीत्येवंभार्यास्यदयिताभवत् ॥ ३ ॥ युवतीनांसहस्रस्यप्रधानाशीलमंडना ॥ तयास
हमहातेजारेमेवैरोचनिर्मुने ॥ ४ ॥ भोगासक्तस्यदैत्यस्यवसतःसुतलेतदा ॥ दैत्यतेजोहरंप्राप्तंपातालंवैसुदर्शनम् ॥५॥ चक्रेप्रविष्टेपाता

लेदानवानांभयंमहत् ॥ अभूद्धलहलाशब्दः क्षुभितार्णवसंनिभः ॥ ६ ॥ तंश्रुत्वासुमहच्छब्दंवलिःखड्गंसमाददे ॥ आःकिमेतदितीत्थंच पप्रच्छासुरपुंगवः ॥ ७ ॥ ततोविंध्यावलिःप्राहसांत्वयंतीनिजंपतिम् ॥ कोशेखड्गंसमाधायधर्मपत्नीशुचिव्रता ॥ ८ ॥ उवाचमधुरंवाक्यं दैत्यराजंसुनिश्चितम् ॥ एतद्भागवतंचक्रंदैत्यचक्रक्षयंकरम् ॥ ९ ॥ संपूजनीयंदैत्येंद्रवामनस्यमहात्मनः ॥ इत्येवमुक्त्वाचार्वंगीप्रयतो साविनिर्ययौ ॥ १० ॥ अथाभ्यागात्सहस्रारंविष्णोश्चक्रंसुदर्शनम् ॥ ततोऽसुरपतिःप्राहकृतांजलिपुटोमुने ॥ संपूज्यविधिवच्चक्रमिदंस्तो त्रमुदैरयत् ॥ ११ ॥ वलिरुवाच ॥ नमस्यामिहरेश्चक्रंदैत्यचक्रविदारणम् ॥ सहस्रांशुंसहस्राभंसहस्रारंसुदर्शनम् ॥ १२ ॥ नमस्यामि हरेश्चक्रंयस्यनाभ्यांपितामहः ॥ तुंगेत्रिशूलधृक्शर्वअरामूलेमहाद्रयः ॥ १३ ॥ अरासुसंस्थितादेवाःसेंद्रार्काश्चसपावकाः ॥ जवेयस्य स्थितोवायुरापोग्निःपृथिवीनभः ॥ १४ ॥ अरासंधिषुजीमूताःसौदाम्न्यृक्षाणितारकाः ॥ बाह्यतोमुनयोयस्यवालखिल्यादयस्तथा ॥ ॥ १५ ॥ तदायुधवरंदेवंवासुदेवस्यभक्तितः ॥ त्रिधापापंशरीरोत्थंवाग्जंमानसमेवच ॥ १६ ॥ तन्मेदहस्वदीप्तांशोविष्णोश्चक्रंसुदर्शनम् ॥ यत्कलौवहुलंपापंपैतृकंमातृकंतथा ॥ १७ ॥ तन्मेहरस्वतरसानमस्तेत्वच्युतायुध ॥ आपदोममनश्यंतुव्याधयोयांतुसंक्षयम् ॥ त्वन्नाम कीर्तनाच्चक्रदुरितंयातुसंक्षयम् ॥ १८ ॥ इत्येवमुक्त्वामतिमान्समभ्यर्च्याथभक्तितः ॥ संस्मरन्पुंडरीकाक्षंसर्वपापविनाशनम् ॥ १९ ॥ पूजितंवलिनाचक्रंकृत्वानिस्तेजसोसुरान् ॥ निश्चक्रामाथपातालाद्विषुवेदक्षिणेमुने ॥ २० ॥ सुदर्शनेविनिष्क्रांतेवलिर्विक्लवतांगतः ॥ पर मामापदंप्राप्यसस्मारस्वंपितामहम् ॥ २१ ॥ सचापिसंस्मृतःप्राप्तःसुतलंदानवेश्वरः ॥ दृष्ट्वातस्थौमहातेजाःसार्घ्यपात्रोवलिस्तदा ॥२२॥ सतमभ्यर्च्यविधिनापितुःपितरमीश्वरम् ॥ कृतांजलिपुटोभूत्वाइदंवचनमब्रवीत् ॥ २३ ॥ संस्मृतोपिसमायातःसुविपण्णेनचेतसा ॥ तन्मे

हितंचपथ्यंचश्रेयांसित्वंतदाशुभम् ॥ २४ ॥ किंकार्यंतातसंसारेवसतापुरुषेणहि ॥ कृतेनयेनवैनास्यबंधःसमुपजायते ॥२५॥ संसारार्णवम
ग्रानांनराणामल्पचेतसाम् ॥ तारणायभवेद्यस्तुतन्मेव्याख्यातुमर्हसि ॥ २६ ॥ पुलस्त्यउवाच ॥ एतद्वचनमाकर्ण्यतत्पौत्राद्दानवेश्वरः ॥
विचिंत्यप्राहवचनंसंसारेयद्धितंपरम् ॥ २७ ॥ प्रह्लादउवाच ॥ साधुदानवशार्दूलयत्तेजातामतिस्त्वियम् ॥ प्रवक्ष्यामिहितांतेद्यतथान्येषां
नृणामपि ॥ २८ ॥ भवजलधिगतानांद्वंद्ववाताहतानांसुतदुहितृकलत्रत्राणभारार्दितानाम् ॥ विषयविषमतोयेमज्जतामप्लवानांभवतिशर
णमेकोविष्णुपोतोनराणाम् ॥ २९ ॥ येसंश्रिताहरिमनंतमनिंद्यमाद्यंनारायणंसुरगुरुंशुभदंवरेण्यम् ॥ शुद्धंखगेंद्रगमनंकमलालयेशंतेधर्म
राजशरणंनविशंतिधीराः ॥ ३० ॥ स्वपुरुषमभिवीक्ष्यपाशहस्तंवदतियमःकिलतस्यकर्णमूले ॥ परिहरमधुसूदनप्रसन्नान्प्रभुरहमन्यनृणां
नवैष्णवानाम् ॥ ३१ ॥ तथान्यदुक्तंनरसत्तमेनइक्ष्वाकुणाभक्तियुक्तेननूनम् ॥ येविष्णुभक्ताःपुरुषाःपृथिव्यांयमस्यतेनिर्विषयाभवंति ॥
॥ ३२ ॥ साजिह्वायाहरिंस्तौतितच्चित्तंयत्तदर्पितम् ॥ तावेवकेवलौश्लाघ्यौयौतत्पूजाकरौकृतौ ॥ ३३ ॥ नूनंनतौकरौप्रोक्तौवृक्षशाखाग्रप
ल्लवौ ॥ नयौपूजयितुंशक्तौहरिपादाम्बुजद्वयम् ॥३४॥ नूनंतत्कंठशालूकमथवाप्रतिजिह्विका ॥ रोगश्चान्योनसाजिह्वायानवक्तिहरेर्गुणान् ॥
॥३५॥शोचनीयःसबंधूनांजीवन्नपिमृतोनरः॥यःपादपंकजंविष्णोर्नपूजयतिभक्तितः॥३६॥येनरावासुदेवस्यसततंपूजनेरताः ॥ मृताअपिन
शोच्यास्तेसत्यंसत्यंमयोदितम् ॥३७॥ शारीरंमानसंवाग्जंमूर्तामूर्तंचराचरम्॥ दृश्यंस्पृश्यमदृश्यंवातत्सर्वंकेशवात्मकम्॥३८॥येनार्चितो
हिभगवांश्चतुर्द्धापित्रिविक्रमः ॥ तेनार्चितानसंदेहोलोकाःसामरदानवाः ॥ ३९ ॥ यथारत्नानिजलधेरसंख्येयानिपुत्रक ॥ तथागुणाश्चदे
वस्यत्वसंख्येयाहिचक्रिणः ॥ ४० ॥ येशंखचक्राब्जकरंचशार्ङ्गिणंखगेंद्रकेतुंवरदंश्रियःपतिम् ॥ समाश्रितास्तेनभवन्तिदुःखिताःसंसार

गर्तेनपतंतितेपुनः ॥ ४१ ॥ येषांमनसिगोविंदोनिवासीसततंभवेत् ॥ नतेपरिभवंयांतिनमृत्योरुद्विजंतिच ॥ ४२ ॥ देवंशार्ङ्गधरंविष्णुं येप्रपन्नाःपरायणम् ॥ नतेषांयमलोकोस्तिनचतेनरकौकसः ॥ ४३ ॥ सतांगतिंप्राप्नुवंतिश्रुतिशास्त्रविशारदाः ॥ यांतिदानवशार्दूलविष्णु भक्तावजंतिताम् ॥ ४४ ॥ यागतिर्दैत्यशार्दूलसंग्रामेनिहतात्मनाम् ॥ ततोधिकांगतिंयांतिविष्णुभक्तानरोत्तमाः ॥ ४५ ॥ यागतिर्धर्मशी लानांसात्त्विकानांमहात्मनाम् ॥ सागतिर्गदितादैत्यभगवद्भक्तिनामपि ॥ ४६ ॥ सर्वावासंवासुदेवंसूक्ष्ममव्यक्तविग्रहम् ॥ प्रपश्यंतिमहात्मा नस्तीर्थभूताभवच्छिदम् ॥ ४७ ॥ प्रणिपत्ययथान्यायंसंसारेनपुनर्भवेत् ॥ कृतेषुवसतेनित्यंक्रीडन्नास्तेमितद्युतिः॥ ४८ ॥ आसीनःसर्वदेहे षुकर्मभिर्नसवध्यते ॥ येषांविष्णुःप्रियोनित्यंतेविष्णोःसततंप्रियाः ॥ ४९ ॥ नतेपुनःसंभवंतितद्भक्तास्तत्परायणाः ॥ ध्यायेद्दामोदरंयस्तु भक्तिनम्रस्तथार्चयेत् ॥ ५० ॥ नहिसंसारपंकेस्मिन्मज्जतेदानवेश्वर ॥ कल्पमुत्थाययेभक्त्यास्मरंतिमधुसूदनम् ॥ ५१ ॥ श्रावयंतिचशृ ण्वंतिदुर्गाण्यतितरंतिते ॥५२॥ हरिगाथामृतंपीत्वावलैर्वैश्रोत्रभाजनैः ॥ प्रहृष्यातिमनोयेषांदुर्गाण्यतितरंतिते॥ ५३ ॥ येषांचक्रगदापाणौ भक्तिरव्यभिचारिणी ॥ तेयांतिनियतंस्थानंयत्रयोगेश्वरोहरिः ॥ ५४ ॥ विष्णुधर्मप्रसक्तानांतेषांयापरमागतिः ॥ सातुजन्मसहस्रेणनतपो भिरवाप्यते ॥ ५५ ॥ किंजप्यैस्तस्यमंत्रैर्वाकिंतपोभिःकिमाश्रमैः ॥ यस्यनास्तिपराभक्तिःसततंमधुसूदने ॥ ५६ ॥ वृथायज्ञोवृथादानं वृथाधर्मोवृथाश्रमः ॥ वृथतपश्चकीर्तिश्चयोद्वेष्टिमधुसूदनम् ॥ ५७ ॥ किंतस्यबहुभिर्मंत्रैर्भक्तिर्यस्यजनार्दने ॥ नमोनारायणायेतिमंत्रः सर्वार्थसाधकः ॥५८॥ विष्णुर्येषांजयस्तेषांकुतस्तेषांपराजयः ॥ येषामिंदीवरश्यामोहृदयस्थोजनार्दनः॥५९॥सर्वमंगलमांगल्यंवरेण्यंवरदं प्रभुम् ॥ नारायणंनमस्कृत्यसर्वकर्माणिकारयेत् ॥ ६० ॥ विष्टयोव्यतिपाताश्चयेऽन्येदुर्नीतिसंभवाः ॥ तेनामस्मरणाद्विष्णोर्नाशंयांति

महासुर ॥ ६१ ॥ तीर्थकोटिसहस्राणितीर्थकोटिशतानिच ॥ नारायणप्रणामस्यकलांनार्हंतिषोडशीम् ॥
पुण्यान्यायतनानिच ॥ तानिसर्वाण्यवाप्नोतिविष्णोर्नामानुकीर्तनात् ॥ ६३ ॥ प्राप्नुवंतिनतांल्लोकान्व्रतिनोवा
णस्यनमस्कारपरैर्नरैः ॥ ६४ ॥ योप्यन्यदेवताभक्तोमिथ्यार्चयतिकेशवम् ॥ सोपिगच्छतिसाधूनांस्थानंपुण्यकृ
नहृषीकेशंपूजयित्वातुयत्फलम् ॥ नृणांसुचीर्णेतपसितत्फलंनकदाचन ॥ ६६ ॥ त्रिसंध्यंपद्मनाभंतुयेस्मरंतिसुमेधसः ॥
फलंनास्त्यत्रसंशयः ॥ ६७ ॥ सततंशास्त्रदृष्टेनकर्मणाहरिमर्चय ॥ तत्प्रसादात्परांसिद्धिंबलेप्राप्स्यसिशाश्वतीम् ॥ ६८ ॥
द्भक्तस्तद्याजीतंनमस्कुरु ॥ तमेवाश्रित्यदेवेशंसुखंप्राप्स्यसिपुत्रक ॥६९॥ आद्यंह्यनंतमजरंहरिमव्ययंचसर्वत्रगंपरमब्रह्मपरंपुराणम्
तिवैष्णवपदंध्रुवमक्षयंचयेमानवाविगतरागपराभवंति ॥७०॥ नारायणंसुरवरंसततंस्मरंतितेधौतपाण्डरपटाइवराजहंसाः॥ संसारसागरजल
तरंतिपारंध्यायंतियेसततमच्युतमीशितारम् ॥७१॥ निष्कल्मषंसपदिपद्मदलायताक्षंध्यानेनतेनहतकिल्बिषचेतनास्ते॥ मातुःपयोधररसंनपु
नःपिबंतियेकीर्तयंतिवरदंवरपद्मनाभम् ॥७२॥ शंखाब्जचक्रवरचापगदासिहस्तंपद्मालयावदनपंकजषट्पदाख्यम् ॥ नूनंप्रयांतिसदनंमधुघाति
नस्तेशृण्वंतियेसुदृढभक्तिपरामनुष्याः ॥७३॥ संकीर्त्यमानंभगवंतमाद्यमाजन्मपापंयदकारियैस्तु ॥ तेमुक्तपापाःसुखिनोभवंतियथामृतप्रा
शनतर्पिताश्च ॥७४॥ तस्माद्ध्यानंस्मरणंकीर्तनंवानाम्नामपिश्रवणंपठतांसज्जनानाम् ॥ कार्यंविष्णोःश्रद्दधानैर्मनुष्यैःपूजातुल्यंतत्प्रशंसंति
देवाः ॥७५॥ बाह्येनचांतःकरणेनयोगिष्वथार्चयेत्केशवमीशितारम् ॥ पुष्पैश्चपत्रैर्ऋतुसंभवैश्चनूनंसपूज्योविधिवन्नरेण ॥७६॥ इतिश्रीवामन
पुराणेभगवत्प्रशंसानामचतुर्नवतितमोऽध्यायः ॥९४॥ बलिरुवाच ॥ भवताकथितंसर्वंसमाराध्यजनार्दनम् ॥ यागतिःप्राप्यतेलोकेसचारा

ध्यः कथंचन ॥१॥ केनार्चनेनदेवस्यप्रीतिःसमुपजायते ॥ कानिदानानिशस्तानिप्रीणनायजगद्गुरोः ॥२॥ उपवासादिकंकार्यंकस्यांतिथ्यां महोदयम् ॥ कानिपुण्यानिशस्तानिविष्णुतुष्टिकराणिवै ॥३॥ यच्चान्यदपिकर्तव्यंहृष्टरूपैरनालसैः ॥ तदप्यशेषंदैत्येंद्रममाख्यातुमिहा र्हसि ॥ ४ ॥ प्रह्लादउवाच ॥ श्रद्धधानैर्भक्तिपरैःसमुद्दिश्यजनार्दनम् ॥ दीयंतेयानिदानानितानियांतिनवैक्षयम् ॥ ५ ॥ ताएवतिथयः शस्तायास्वभ्यर्च्यजगत्पतिम् ॥ तच्चित्तस्तन्मयोभूत्वाउपवासीनरोभवेत् ॥ ६ ॥ पूजितेषुद्विजेंद्रेषुपूजितस्तुजनार्दनः ॥ यस्तान्द्वेष्टिस मूढात्मासयातिनरकंध्रुवम् ॥ ७ ॥ तानर्चयेन्नरोभक्त्याब्राह्मणान्विष्णुतत्परः ॥ एवमाहहरिःपूर्वंब्राह्मणामामकीतनुः ॥ ८ ॥ ब्राह्मणो नावमंतव्योवुधोवाप्यवुधोऽपिवा ॥ सोऽपिदिव्यातनुर्विष्णोस्तस्मात्तंह्यर्चयेन्नरः ॥ ९ ॥ तान्येवचप्रशस्तानिकुसुमानिमहासुर ॥ यानि स्युर्वर्णयुक्तानिरसगंधयुतानिच ॥ १० ॥ विशेषतःप्रवक्ष्यामिपुण्यानितिथिभिःसह ॥ दानानीहप्रशस्तानिमाधवप्रीणनायतु ॥ ११॥ जातीशताह्वासुमनाःकुंदंवहुपुटंतथा ॥ वाणंचचंपकाशोकंकरवीरंचयूथिका ॥ १२ ॥ पारिभद्रंपाटलाचवकुलंगिरिशालिनी ॥ तिलपाणों चजपापुष्पंपीतकंतगरंत्वपि ॥ १३ ॥ एतानिहिप्रशस्तानिकुसुमान्यच्युतार्चने ॥ सुरभीणितथान्यानिवर्जयित्वातुकेतकीं ॥ सहस्रेणनतपो विल्वपत्रंशमीपत्रंपत्रंभृंगमृगांकयोः ॥ तमालमालतीपत्रंशस्तंचहरिपूजने ॥ १५ ॥ एषामपिहिपुष्पाणिप्रशस्तान्यर्चनेवृथायज्ञोवृथादानं पितेषांस्युःपत्राण्यर्चाविधौहरेः ॥ १६ ॥ वीरुधांचप्रवालेनवर्हिषांचार्चयेन्नरः ॥ नानारूपैश्चानुभावैःकमलेन्दीवरादिभिोनारायणायेतिमंत्रः शुचिभिःसूक्ष्मजलप्रक्षालितैर्वले ॥ वनस्पतीनामर्चेततथादूर्वाग्रपल्लवैः ॥ १८ ॥ तथैवप्रतिपूज्योसौपत्रकुन्दसर्वमंगलमांगल्यंवरेण्यंवरदं तकुंकुमेनचयत्नतः ॥ १९ ॥ उशीरपद्मकाभ्यांसतथाकालीयकादिना ॥ महिषाख्यंकणंदारुसिह्लकंनाम्तेनामस्मरणाद्विष्णोर्नाशंयांति

श्रीशेधूपनेस्युःप्रियाणिवै ॥ हविषासंस्कृतायेतुयवगोधूमशालयः ॥ २१ ॥ तिलमुद्गादयोमाषाव्रीहयश्चप्रि
भूमिदानानियानिच ॥ २२ ॥ वस्त्रान्नस्वर्णदानानिप्रीतयेमधुघातिनः ॥ माघमासेतिलाःशस्तास्तिलधेनुश्चदाने
यानिमाधवःप्रीयतामिति ॥ फाल्गुनेव्रीहयोवस्त्रंतथाकृष्णाजिनादिकम् ॥ २४ ॥ गोविंदप्रीणनार्थंचदातव्यंपुरुषर्षभ
णिशयनान्यासनानिच ॥ २५ ॥ विष्णोःप्रीत्यर्थमेतानिदेयानिब्राह्मणेषुच ॥ गंधशालीनिवस्तूनिवैशाखेसुरभीणिच ॥
जमुख्येभ्योमधुसूदनतुष्टये ॥ उदकुंभाब्धधेनुंचतालवृंतंसचंदनम् ॥ त्रिविक्रमस्यप्रीत्यर्थंदातव्यंसाधुभिःसदा ॥ २७ ॥ सदाभ
नभार्ययायुतश्चयोविष्णुगतःसदाभवेत् ॥ शृणोतिनित्यंविधिवच्चभक्त्यासंपूजयन्यःप्रणतश्चविष्णुम् ॥ २८ ॥ सचाश्वमेधस्यसदक्षि
फलंसमग्रंकिलहीनपापः ॥ प्राप्नोतिदत्तस्यसुवर्णभूमेरश्वस्यगोनागरथस्यचैव ॥ २९ ॥ नारीनरश्चापिचपादमेकंशृण्वञ्शुचिःपुण्यतम
पृथिव्याम् ॥ स्नानेकृतेतीर्थवरेसुपुण्येगंगाजलेनैमिषपुष्करेवा ॥ ३० ॥ कोकामुखेयत्प्रवदंतिविप्राःप्रयागमासाद्यचमाघमासे ॥ सतत्फ
लंप्राप्यचवामनस्यसंकीर्तयन्नान्यमनाःपदंहि ॥ ३१ ॥ गच्छेन्मयानारदतेद्यचोक्तंयद्राजसूयस्यफलंप्रयच्छेत् ॥ यद्भूमिलोकेसुरलोक
लभ्येमहत्सुखंप्राप्यनरःसमग्रम् ॥ ३२ ॥ प्राप्नोतिचास्यश्रवणान्महर्षेसौत्रामणेर्नास्तिचसंशयोमे ॥ रत्नस्यदानस्यचयत्फलंभवेत्सूर्य
स्यचंद्रेग्रहणेचराहोः ॥ ३३ ॥ अन्नस्यदानेनफलंयथोक्तंबुभुक्षितेप्राप्तवरेचसाग्निके ॥ दुर्भिक्षसंपीडितपुत्रभार्येज्ञातौसदापोषणतत्परेच ॥
॥ ३४ ॥ देवाग्निविप्रर्षिरतेचपित्रोःसुतेतथाभ्रातरिज्येष्ठकेच ॥ यत्तेफलंतत्प्रवदंतिदेवाःसतत्फलंलभतेचास्यपाठात् ॥ ३५॥ चतुर्दशंवाम
नमाहुरग्र्यंश्रुतेचयस्याघचयाश्चिनाशम् ॥ प्रयांतिनास्त्यत्रचसंशयोमेमहांतिपापान्यपिनारदाशु ॥ ३६ ॥ पाठात्संश्रवणाद्विप्रश्रवणाद

पिकस्यचित् ॥ नश्यं[illegible]सर्वपा[illegible]निवा[illegible]मनस्यस[illegible]मुने ॥ ३७ ॥ उपानद्युगलंछत्रंलवणामलकादिकम् ॥ आषाढेवामनप्रीत्यैदातव्यानिविप
श्चिता ॥ ३८ ॥ [illegible]सिभाद्रपदेदद्यात्पायसंमधुसर्पिषी ॥ हृषीकेशप्रीणनार्थंलवणंसगुडौदनम् ॥ ३९ ॥ नीलंतुरंगंवृषभंदधिताम्रायसा
दिकम् ॥ प्रीत्यर्थंपद्मनाभस्यदेयमाश्वयुजेनरैः ॥ ४० ॥ रजतंकनकंदीपान्मणिमुक्ताफलादिकम् ॥ दामोदरतुष्ट्यर्थंप्रदद्यात्का
र्तिकेनरः ॥ ४१ ॥ खरोष्ट्राश्वतरान्नागाञ्शकटाद्यमजाविकम् ॥ दातव्यंकेशवप्रीत्यैमासिमार्गशिरेनरैः ॥ ४२ ॥ प्रासादनगरादीनिगृह
प्रावरणादिकम् ॥ वामनस्यचतुष्ट्यर्थंपौषेदेयानिभक्तितः ॥ ४३ ॥ दासीदासमलंकारमन्नंपड्रससंयुतम् ॥ पुरुषोत्तमतुष्ट्यर्थंप्रदेयंसार्वका
लिकम् ॥ ४४ ॥ यद्यदिष्टतमंकिंचिद्यद्वाप्यस्यगृहेशुचि ॥ तत्तद्धिदेयंप्रीत्यर्थंदेवदेवस्यचक्रिणः ॥ ४५ ॥ यःकारयेन्मंदिरंकेशवस्यपुण्याँ
ल्लोकान्सजयेच्छाश्वतान्वा ॥ दत्त्वारामान्पुष्पफलाभिपन्नान्भोगान्सभुंक्तेकामतःश्लाघनीयान् ॥ ४६ ॥ पितामहस्यपुरतःकुलान्यष्टोत्तराणि[illegible]श्च
तारयेदात्मनासार्धंविष्णोर्मंदिरकारकः ॥ ४७ ॥ इमाश्चपितरोदेवागाथागायंतियोगिनः ॥ पुरतोयदुसिंहस्यह्यमोघस्यतपस्विनः ॥ [illegible]दापाणौ
अपिनःस्वकुलेकश्चिद्विष्णुभक्तोभविष्यति ॥ हरिमंदिरकर्तायोभविष्यतिशुचिव्रतः ॥ ४९ ॥ अपिनःसंततौजायेद्विष्णवालय[illegible]नसहस्रेणनतपो
संमार्जनंचधर्मात्माकरिष्यतिचभक्तितः ॥ ५० ॥ अपिनःसंततौजातोध्वजंकेशवमंदिरे ॥ दास्यतेदेवदेवायदीपंपुष्पान्[illegible] वृथायज्ञोवृथादानं
अपिनःसकुलेभूयादेकादश्यांहियोनरः ॥ करिष्यत्युपवासंचसर्वपातकहानिदम् ॥ ५२ ॥ महापातकयुक्तोवाप[illegible]नमोनारायणायेतिमंत्रः
विमुक्तपापोभवतिविष्णवावसथचित्रकृत् ॥ ५३ ॥ इत्थंपितॄणांवचनंश्रुत्वानृपतिसत्तमः ॥ देवतायतनंभूम्यां[illegible]सर्वमंगलमांगल्यंवरेण्यंवरदं
विभूतिभिःकेशवस्यकेशवायतनान्यथ ॥ चित्रयामासशुचिभिःपंचवर्णैस्तुचित्रकैः ॥ ५५ ॥ दीपपा[illegible]तेनामस्मरणाद्विष्णोर्नाशंयांति

सुवर्णतैलपूर्णानिघृतपूर्णानिचस्वयम् ॥ ५६ ॥ नानावर्णावैजयंत्योमहारजनरंजिताः ॥ मंजिष्ठानवरंगीयाःश्वेतपा
आरामाविविधाह्यद्याःपुष्पाढ्याःफलशालिनः ॥ लतापल्लवसंछन्नादेवदारुभिरावृताः ॥ ५८ ॥ दे
कुशलैर्जनैः ॥ गंधर्वविद्यारागज्ञैःरत्नसंस्कारिभिर्दृढैः ॥ ५९ ॥ तेषुनित्यंप्रपूज्यंतेयतयोब्रह्मचारिणः ॥ की० रु०आ०
नांधविकलादयः ॥ ६० ॥ इत्थंसनृपतिर्भूत्वाश्रद्दधानोजितेंद्रियः ॥ ज्यामघोविष्णुनिलयंगतइत्यनुशुश्रुम ॥ ९.. १०—०
तैलेनमधुकातसिसंभवैः ॥ दीपप्रदानान्नरकानंधतामिस्रसंज्ञकान् ॥ तीर्त्वासभार्ययाराजाविष्णुलोकमगात्ततः ॥ ६२ ॥ तमं३—०
लेमार्गेज्यामघकारितम् ॥ व्रजंतिनरशार्दूलाविष्णुलोकंजिगीषवः ॥ ६३ ॥ तस्मात्त्वमपिराजेंद्रकुरुदेवालयंहरेः ॥ तमर्चयस्वयत्
णांश्चवहुश्रुतान् ॥ ६४ ॥ पौराणिकान्विशेषेणसदाचाररताञ्शुचीन् ॥ वासोभिर्भूषणैरत्नैर्गोभिर्भूकनकादिभिः ॥ ६५॥ विभवेसतिदे
प्रीणनंकुरुचक्रिणः ॥ ६६ ॥ एवंक्रियायोगरतस्यतेद्यनूनंसुरारिःशुभदोभविष्यति ॥ नरानसीदंतिवलेसमाश्रिताविभुंजगन्नाथमनंतमच्युतम्
॥ ६७ ॥ प्रह्लादःसतदाचोक्त्वापुनर्नगरमध्यगात् ॥ ६८॥ पुलस्त्यउवाच ॥ इत्येवमुक्त्वावचनंदितीश्वरोवैरोचनंसत्यमनुत्तमंहि ॥ संपू
जितस्तेनविमुक्तिमाययौसंपूर्णकामोहरिपादभक्तः ॥ ६९ ॥ गतेहितस्मिन्मुदितेपितामहेवलेर्वभौमंदिरमिंदुवर्णम् ॥ महेंद्रशिल्पिप्रवरोथ
केशवंसकारयामासमहामहीयान् ॥७०॥ स्वयंस्वभार्यासहितश्चकारदेवालयेमार्जनलेपनादिकाः ॥ क्रियामहात्मायवशर्करार्द्यान्नलिंचकारा
प्रतिमंमधुद्रुहः ॥ ७१ ॥ दीपप्रदानंस्वयमायताक्षीविंध्यावलीविष्णुगृहेचकार ॥ गेयंसधर्मग्रहणंचधीमान्पौराणिकैर्विप्रवरैरकारयत् ॥

॥ ७२ ॥ तथाविधस्यासुरपुंगवस्यधर्मानुमार्गेप्रतिसंस्थितस्य ॥ जगत्पतिर्दिव्यवपुर्जनार्दनस्तस्थौमहात्माबलिरक्षणाय ॥ ७३ ॥ सूर्या
युताभंमुसलंप्रगृह्यनिघ्नन्सदुष्टान्नरयूथपालान् ॥ द्वारिस्थितोनप्रददौप्रवेशंप्राकारगुप्तौबलिनोगृहेतु ॥ ७४ ॥ द्वारिस्थितेधातरिरक्षपालेनारा
यणेसर्वगुणाभिरामे ॥ प्रासादमध्येहरिमीशितारमभ्यर्चयामाससुरर्षिमुख्यम् ॥ ७५ ॥ सएवमास्तेसुरराड्बलिस्तुसमर्चयन्वैहरिपादपं
कजे ॥ सस्मारनित्यंहरिभाषितानिसतस्यजातोविनयांकुशस्तु ॥ ७६ ॥ इदंचवृत्तंसपपाठदैत्यराट्स्मरन्सुवाक्यानिगुरोःशुभानि ॥
तथ्यानिपथ्यानिपरत्रचेहपितामहस्येंद्रसमस्यवीरः ॥ ७७ ॥ येवृद्धवाक्यानिसमाचरंतिश्रुत्वादुरुक्तान्यपिपूर्वतस्तु ॥ स्निग्धानिपश्चान्नवनी
तशुद्धामोदंतितेनात्रविचार्यमास्ति ॥ ७८ ॥ आपद्भुजंगदष्टस्यमंत्रहीनस्यसर्वदा ॥ वृद्धवाक्यौषधान्येवकुर्वंतिकिलनिर्विषम् ॥ ७९
वृद्धवाक्यामृतंपीत्वातदुक्तान्यनुमन्यच ॥ यातृप्तिर्जायतेपुंसांसोमपानेकुतस्तथा ॥ ८० ॥ आपत्तौपतितानांयेषांवृद्धानसंतिशास्त
तेशोच्याबंधूनांजीवंतोऽपीहमृततुल्याःस्युः ॥८१॥ आपद्ग्राहग्रहीतानांवृद्धाःसंतिनपंडिताः ॥ एषांमोचयितारोवैतेषांशांतिर्नविद्
आपज्जलनिमग्नानांह्रियतांव्यसनोर्मिभिः ॥ वृद्धवाक्यैर्विनानूनंनैवोत्तारःकथंचन ॥ ८३ ॥ पुलस्त्यउवाच ॥ तस्माद्यो
याद्विदधातिवा ॥ ससद्यःसिद्धिमाप्नोतियथावैरोचनिर्बलिः ॥ ८४ ॥ इतिश्रीवामनपुराणेश्रीत्रिविक्रमचरितंसमाप्तम्
एनन्मयापुण्यतमंपुराणंतुभ्यंतथानारदकीर्तितंवै ॥ श्रुत्वाचकीर्त्यापरयासमेतोभक्त्याचविष्णोःपदमभ्युपैति ॥
गंगावारिविगाहनात् ॥ तथापुराणश्रवणाद्दुरितानांविनाशनम् ॥ ८६ ॥ नतस्यरोगाजायंतेनविषंचाभिचारिकम्

णोतीहवामनम् ॥ ८७ ॥ इदंरहस्यंपरमंतवोक्तंनवाच्यमेवंहरिभक्तिवर्जिते ॥ द्विजस्यनिंदारतिहीनतारतेसहेतुवा
नमोनमःकारणवामनायनारायणायामितविक्रमाय ॥ श्रीशार्ङ्गचक्रासिगदाधरायनमोस्तुतस्मैपुरुषोत्तमाय ॥ ८
ष्यःकृष्णभावनः ॥ तस्यविष्णुःपदंमोक्षंददातिसुरपूजितः ॥ ९० ॥ वाचकायप्रदातव्यंगोभूस्वर्णविभूषणम् ॥ वि
वणनाशकः ॥ ९१ ॥ त्रिसंध्यंचपठञ्शृण्वन्सर्वपापप्रणाशनम् ॥ असूयारहितंविप्रःसर्वसंपत्प्रदायकम् ॥९२॥ इतिश्रीवा
नारदसंवादेपंचनवतितमोऽध्यायः ॥ ९५ ॥ ॐ ॥ शुभमस्तु ॥ श्रीकृष्णार्पितमस्तु ॥

॥ इति वामनपुराणं संपूर्णम् ॥

इदं पुस्तकं मुम्बय्यां क्षेमराज श्रीकृष्णदासश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" (स्टीम्) मुद्राक्षरयन्त्रालये मुद्रयित्वा
प्रकाशितम्। मार्गशीर्षसंवत् १९६०, शके १८२५.

